## लेखक की अन्य प्रकाशित रचनायें

(१) भारतीय संस्कृति के आधार तत्त्व
(२) अलङ्कारशास्त्र का इतिहास
(३) वैदिक साहित्य का इतिहास
(४) संस्कृत साहित्य का इतिहास
(५) पं० अम्बिकादत्त व्यास—एक अध्ययन
(६) ऋक्सूक्त-सुधाकर
(७) ऋक्सूक्तसंग्रह
(८) चतुर्वेद-सूक्तसुधाकर
(९) वैदिकसूक्त-संग्रह
(१०) विषविज्ञान
(११) उदयनचरितम्
(१२) पोषण के लिये खनिज और विटामिन
(१३) संस्कृत-नाटक-सूक्ति-तरङ्गिणी
(१४) छन्दोऽलङ्कारप्रकाश
(१५) प्राचीन कथायें
(१६) गढ़वाल के प्रमुख तीर्थ
(१७) गढ़वाल के संस्कृत अभिलेख
(१८) ध्वन्यालोक-व्याख्या
(१९) अभिज्ञानशाकुन्तलम्-व्याख्या
(२०) प्रियदर्शिका-व्याख्या
(२१) हर्षचरितम् पञ्चम उच्छ्वास-व्याख्या
(२२) किरातार्जुनीयम् प्रथम सर्ग-व्याख्या
(२३) रघुवंश त्रयोदश सर्ग-व्याख्या
(२४) रघुवंश द्वितीय सर्ग-व्याख्या
(२५) केदारखण्डामृतम्
(२६) A Descriptive Catalogue of Sanskrit Manuscripts.
(२७) संस्कृत नाटकों का भौगोलिक परिवेश

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# ASTI-KASHCHID VAGARTHIYAM

(A drama based on the life of Kalidasa)

**Dr. Krishna Kumar**
M. A. Sahityacharya, Ph. D., D. Litt.
Head of the Department of Sanskrit
Garhwal University, Srinagar Garhwal

MAYANK PRAKASHAN, MORADABAD

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# अस्ति-कश्चिद्-वागर्थीयम्

(महाकविकालिदासजीवनवृत्ताभिव्यञ्जिकां
किम्वदन्तीमाश्रित्य कृतं नाटकम्)

डा० कृष्णकुमार
एम. ए.; साहित्याचार्य; पी-एच. डी.; डी. लिट्.
विभागाध्यक्ष संस्कृत
गढ़वाल विश्वविद्यालय, श्रीनगर गढ़वाल

मयंक प्रकाशन
मुरादाबाद

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# अस्ति-कश्चिद्-वागर्थीयम्

(महाकविकालिदासजीवनवृत्ताभिव्यञ्जिकां
किम्वदन्तीमाश्रित्य कृतं नाटकम्)

डा० कृष्णकुमार
एम. ए.; साहित्याचार्य; पी-एच. डी.; डी. लिट्.
विभागाध्यक्ष संस्कृत
गढ़वाल विश्वविद्यालय, श्रीनगर गढ़वाल

मयंक प्रकाशन
मुरादाबाद

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# अस्ति-कश्चिद्-वागर्थीयम्

डा० कृष्णकुमार

प्रकाशक :
मयङ्क प्रकाशन
भूषण भवन, मण्डी बांस
मुरादाबाद

© डा० कृष्णकुमार

मूल्य : 65.00
१९८४ ई०

मुद्रक :
साहित्यकार प्रेस, मेरठ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्रष्टारोऽपि प्रजानां प्रबलभवभयाद् यं नमस्यन्ति सिद्धाः
यश्चित्ते सम्प्रविष्टोऽप्यवहितमनसां ध्यानयुक्तात्मनां च।
देवानामादिदेवः स जयतु भगवाञ्छ्रीमहाकालनामा
बिभ्राणः सोमलेखामहिवलययुतां व्यक्तलिङ्गं कपालम्॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जय महाकाल जय महाकाल ।।

प्रबल भुवन बन्धन से डरते प्रजा-सृजन करने वाले
विनत सतत झुक-झुक कर सुरगण जिसको नमन किया करते ।
ध्यान योग में आत्मलीन हो मन को एकाग्रित करके
सतत योगियों के मानस में जो संविष्ट रहा करते ।।
सकल सृष्टि, सब देवों का जो आदिदेव नियमन करते
अहिमण्डल-युत चन्द्रकला को मस्तक पर धारण करते ।
नर-कपाल को धारण कर जो व्यक्त लिङ्ग अपना करते
उन भगवन् श्री महाकाल के हम सब जयकारें करते ।।

जय महाकाल जय महाकाल ।।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# भूमिका

भारतीयानां प्राक्तनानां मनीषिणां कवीनां विदुषां वा कृतिभिस्तेषां जीवन-वृत्त समय-स्थानादिकपरिचयावगमः सामान्येन न सुकरः। न चापि तासां कृतीनां व्याख्यातृभिः प्रामाणिक रूपेण तथ्यानां तथोद्घाटनं विहितं, येन तेषां वृत्तं याथातथ्येन विज्ञायेत। काचन लोकानुश्रुतयः किंवदन्त्यो दन्तकथाश्च क्वचिदनुश्रूयन्ते क्वचिच्च प्राचीनसाहित्ये समुपलभ्यन्ते। परं न तत्र किमपि प्रामाण्यम्। यद्यपि बाण-विह्लणादीनां केषाञ्चित्कवीनां काव्यरचनासु तेषां वंश-जीवनवृत्तादिकस्य परिचयो विद्यते, तथापि तस्य अलौकिकवृत्तान्तसमाच्छन्नत्वाद् यथार्थनिर्णयो न सुकरः।

**कालिदासविषयिकाऽश्रुतिः—**

महाकविकालिदास विषयिका स्थितिरप्येवंविधैव। न तस्य श्रव्य काव्येषु रघुवंश-कुमारसम्भव-मेघदूत-ऋतुसंहारेषु रचयितुरभिधानमपि क्वचिल्लभ्यतेऽभिव्यज्यते वा, वंश-जीवनवृत्त-स्थान-समयादीनां तु कथैव का। दृश्यकाव्यानां च प्रस्तावनाभिरे तदेव केवलं परिज्ञातुं शक्यते, यदेतासां कृतीनां रचयिता कालिदासो नाम कश्चिन्महाकविरवर्तत, रसभावदीक्षागुरोः सम्राजो विक्रमादित्यस्य समकालिकः, भास-सौमिल्ल-कविपुत्रादयश्च तस्मात्प्राक्तनाः। कोऽयं विक्रमादित्यः; कस्मिन् समये जातः, कुत्र वास्य राजधानी, इति सर्वमेव विवादास्पदम्। केचन समालोचकास्तं खिष्टाद् द्वितीयशताब्दी पूर्वकालिकमन्ये प्रथमशताब्दीपूर्वकालिकमपरे खिष्टस्य चतुर्थपञ्चमशताब्दिकमितरे च षष्ठशताब्दीकं वा प्रतिपादयितुं यतन्ते। इत्थं विविधमतान्यवलम्ब्यैव कालिदाससमयोऽपि गण्यते। केचन तु वर्तमानकालिकाः समालोचकाः दृश्यकाव्यरचयितारं कालिदासं श्रव्यकाव्यरचयितुः कालिदासाद् भिन्नत्वेन प्रतिपादयन्ति। इत्थं च कालिदाससम्बन्धिनोऽनेके मतभेदाः लोके दरीदृश्यन्ते।

अपि च राजशेखरेण शृंगारे ललितोद्गारे कालिदासत्रयी वर्णिता। परन्तु न तेन सङ्केतितं प्रकरणेऽस्मिन् यदत्र रघुवंश-अभिज्ञानशाकुन्तलादीनां काव्यानां रचयिता कतमः कविः कालिदासः। इत्थं कालिदाससमयनिर्धारणेन सहैव तस्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्थान-जीवनवृत्त-व्यक्तित्वादिविषयेष्वपि महत्याऽव्यवस्थया विदुषां समक्षं सततं नृत्यते ।

कालिदासविषयिकाः बह्व्योऽनुश्रुतयः किम्वदन्त्यश्च लोककथारूपेण जगति प्रथिताः । प्राचीनलोकसाहित्येऽपि तासु यत्र तत्र विद्यमानास्वपि तासां तथ्यप्रतिपादकं किमपि प्रामाण्यं न समुपलभ्यते । काल्पनिक्यश्च ताः समालोचकैराधुनिकैः परिगण्यन्ते । तासां सर्वासामप्यनुश्रुतीनां किम्वदन्तीनां दन्तकथानां च वचनमत्र वर्णनगौरवभयात् प्रकृतानुपयोगित्वाच्च न विहितम् ।

परमेकाऽनुश्रुतिस्तु महाकविकालिदासकवित्वशक्तिप्राप्तिविषयिका वर्तते रम्या सहृदयमनोहारिणी । तथा ह्यनुश्रूयते—"कालिदासः शैशवादेव महान् मूर्खो मूढोऽव्युत्पन्नश्च जडमतिरासीत् । अस्मिन्नेव समये भरतखण्डमध्यदेशालङ्कारभूतस्य नृपतेः सुदर्शनस्य सुता विद्योत्तमा काचिद् विद्यामदगर्विता लावण्येन सकलभुवनयुवतिवृन्दातिशायिनी मञ्जुलदर्शना रमणीया राजकन्या बभूव । तस्याश्चेदं घोषणं जगति प्रख्यातं बभूव—"यो मां जयति शास्त्रार्थे स मे भर्ता भविष्यति" । बहवः पण्डितम्मन्याः युवानो विद्वांसस्तत्र दारपरिग्रहाभिलाषिणः समागत्य परं शास्त्रार्थे पराभवमवाप्य परिभवदहनदाहदग्धहृदयाः विषण्णवदनाः प्रतिनिवर्तनाय बाध्याः बभूवुः ।

तदनन्तरमेव हृदयेषु मनःसु च पराभवजनितं परिभवमसहमानाः केचन पण्डिताः वने काष्ठच्छेदनकर्म कुर्वन्तं कालिदासमतिमूढं, परं यौवनकान्तिसमृद्धिसमेधितमुपलभ्योपजापं विधाय सङ्केतैरेव विद्योत्तमया शास्त्रार्थं कारयित्वा सङ्केतार्थान् विविधं व्याख्यातवन्तः । कालिदासस्ययौवनेनसौन्दर्येण च विमूढा राजकन्या स्वपराजयं स्वीकृत्य तमेव मूढं भर्तृरूपेणाङ्गीकृतवती ।

प्रथम सङ्गम वेलायामेव कालिदासं महामूढं विद्यया प्रतिभया च शून्यमवगत्य हृदयविदारिण्या महत्या मनोव्यथया विह्वलीभूताऽपि रोषेण विवशीकृता विद्योत्तमा तं राजभवनान्निर्गन्तुं बाध्यं चकार । कथितं च तया—"विद्योत्तमकया सह सख्यं विद्यानिष्णातस्यैव । विद्याप्रकर्षेण काव्यकर्तृत्वव्युत्पत्तिप्रतिभया चैव समृद्धे भवति त्वयि त्वावयोः सङ्गमः । तदैव त्वं मे भर्ता । समबुद्धिबलयोरेव सख्यम्" इति ।

नवपरिणीतया तिरस्कृतो निर्भर्त्सितश्चैवं स वराको विद्योत्तमापाणिग्रहीता कालिदासो दारुणापमानजनितया वेदनया हृदये सम्पीडितः काञ्चिदरण्यानीं समा-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ससाद । तत्र भगवतीं कालीमुपास्य समर्च्य च तत्प्रसादेन विद्याप्रकर्षेण कवित्वेन च समलङ्कृतसमृद्धः संजज्ञे । तदनन्तरं परिनिवर्तमानोऽसौ विद्योत्तमया सह सङ्गतिमभिलषमाणः विद्योत्तमावक्षद्वारं प्रपन्नः । द्वारसमुद्घाटनात् पूर्वमेव राजकन्यया पृष्टम्—"अस्ति कश्चिद् वा गर्थः" । तत्र कालिदासस्योत्तरैः हृदये मनसि च प्रीता सन्तुष्टा सा द्वारमुद्घाट्य तं समाहृत्य हृदयवल्लभरूपेणाङ्गीचकार ।

तदनन्तरं महाकविना कालिदासेन "अस्ति कश्चिद् वा गर्थं" इति त्रिपदं प्रश्नमनुसृत्य कुमारसम्भव-मेघदूत-रघुवंशाख्यानि त्रीणि काव्यानि विरचितानि । कालीलब्धप्रसादः स महाकविः कालिदासनाम्ना जगति प्रथितो बभूव ।"

**नाटककथानकयोजने लेखकस्य कल्पनाः—**

यद्यपि कथैषा कालिदासविषयिका लोकानुश्रुतिरेव, न चात्र किमप्यैतिहासिकं प्रामाण्यम्, तथापि कथायाः मनोरञ्जकत्वं रोचकत्वं सहृदयहृदयाह्लादकत्वमसन्दिग्धमस्त्येव । कालिदासकवित्वव्युत्पत्तिप्रतिभाप्रभावितेन प्रस्तुतानाटकलेखकेनाऽत्र स्वकीयबुद्धिकल्पनाभिरनुश्रुतिरेषा रसगुणालङ्कारादिभिरलङ्कृत्य अभिनयादिगुणैर्विभूष्य नाटकरूपेण सहृदयहृदयानुप्रीत्यर्थं लोकरञ्जनार्थं च प्रस्तूयते । नाटकस्यास्य कथानकसंयोजने केवलं स्वयंवरपणः, राजकुमारी विद्योत्तमा, कालिदास इति कानिचिदेव वस्तूनि लोकानुश्रुतिसम्बन्धविशिष्टानि वर्तन्ते, अन्यच्च सर्वं कल्पनाप्रसूतमेव ।

प्राचीना लोकानुश्रुतिः प्रथिता—"कालिदासः देवीं कालीमुपास्य कवित्वशक्तिव्युत्पत्तिबीजैः संभूषितो बभूव । परन्तु कश्चिज्जडबुद्धिरेवंविधाभिः देवतोपासनाभिः कथमिव विद्याप्रकर्षं कवित्वं वाऽधिगन्तुंक्षमते । प्रतिभैव कवित्वबीजरूपः जन्मजन्मान्तरेसमुपलब्धः संस्कारविशेषः । अत एवाऽत्र नाटकस्य कथानके स्वाभाविकत्वगुणसम्पादनहेतोः कालिदासशिरस्याघातकल्पना वर्तते । शिरसि प्रचण्डाघातप्रहारप्रहृतस्य बालकस्य बुद्धिः प्रतिभा वा कुण्ठत्वं प्रभ्रंशत्वं वाऽधिगच्छति, कालान्तरं पुनरपि तथैवाघातं सम्प्राप्य तस्य कुण्ठत्वस्य जडत्वस्य च तिरोभवनं पूर्ववच्च प्रतिभायाः प्रकाशमानत्वं सम्भवति, इति वैज्ञानिकैश्चिकित्सकैश्चानुमोद्यते । एवंविधा कल्पना कालिदाससम्बन्धिनीमनुश्रुतिं नाटकेऽस्मिन् कथारूपेण निबध्नाति स्वाभाविकत्वगुणोपेतां सहृदयाह्लादिनीं च विदधातु समर्थेव ।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**नाट्यसंयोजतवैशिष्ट्यम्—**

अभिनेयत्वस्वाभाविकत्वरसादिसम्भृतत्वादयो रूपकाणां विशिष्टाः गुणाः। नाट्यानि दृश्यकाव्यानि चोच्यन्ते। रङ्गमञ्चेष्वभिनीयमानानि तानि सहृदयानां हृदयानि रसास्वादनेन चावर्ज्य आह्लादितानि कुर्वन्ति। सहृदयाः दर्शकाः नाटकीयघटनानां प्रत्यक्षावलोकनेन रसास्वादजनितं परमाह्लादमनुभवन्तु इति महाकावयो नाट्य-रचनासंलग्नमनसो भवन्ति। यदि च रूपकाणि ह्येतानि अभिनेयत्वगुणोपेतानि न भवेयुः, रङ्गशालासु च नाभिनीयेरंस्तदा दृश्यकाव्यश्रव्यकाव्योः को वाभेदो भवेत्? प्रस्तुतं तु नाटकं रङ्गशालास्वभिनीयमानं सत् सहृदयानां हृदयान्यावर्ज्य तान् रसास्वादनसमुद्भूतानन्दनिमग्नान् कुर्यादित्येव हेतुना नाटकसंरचनायां कविनाऽत्र प्रयासो विधीयते।

स्त्रीभिः निम्नकोटिकैश्च पात्रैः संवादेषु शौरसेनी भाषा देशभाषा वा प्रयोजनीयेति भरतनाट्यशास्त्रनिर्देशः। परं प्रायशः पञ्चविंशतिशतवर्षपूर्वनिर्दिष्टस्यनियमस्या-स्यपरिपालनं गतानुगतिकत्वमेव। स्त्रियो निम्नकोटिकाश्च जनाः न तथा विद्यापा-रङ्गताः संस्कृतभाषासंभाषणक्षमा इत्येवं परिकल्प्यैव भरतमुनिना तथा निर्दिष्टमा-सीत् तस्मिन् युगे। तेषां संवादेषु प्राकृतादिदेशभाषाणां प्रयोजनमेव स्वाभाविक-मिति भरतविचारणम्। परन्तु तात्पर्यमजानन्तो गड्डलिकाप्रवाहवशंवदाः केचन कवयो विद्वांसश्च वर्तमानकालेऽपि संस्कृतभाषानाट्यरचनासु कृत्रिमरूपेण प्राकृत भाषाणां प्रयोगं कृत्वा पाण्डित्यप्रदर्शनकुशलाः संलक्ष्यन्ते। अपि च किं विद्योत्तमा-सदृशीनां सरस्वतीरूपेणसमवतीर्णानां नारीणां संवादेषु मूढजनसदृशप्राकृतभाषो-च्चारणं समुचितम्? अपि च सर्वजनसमादरणीये वैदुष्यकवित्वादिगुणसमलङ्कृते नारीवर्गे निम्नकोटिकपात्रसदृशप्राकृतभाषायाआरोपणमिति लज्जास्पदमेव। इत्येतत् परिकल्पयैव संवादेषु सर्वत्रास्मिन् नाटके स्त्रियः संस्कृतभाषामेव व्यवहृ-रन्ति। अतोऽत्र सुललितसरलशुद्धसंस्कृतभाषा या एव प्रयोगः। केवलं कालिदास-मूढावस्थायां प्रयोजिता संस्कृतभाषा न तथा संस्कृता परं खण्डिता त्रुटिता च वर्तते।

प्राचीनेयं परम्परा भारतीयानाट्यरचनासंविधाने नाट्यशास्त्रकर्तृभिः प्रतिपादिता यन्नाटयरचनायां नान्दी-प्रस्तावना-अङ्क-दृश्य-अर्थोपक्षेपक-भरतवाक्यानां समुचित-योजना करणीया।

नान्दीपाठस्तु मङ्गलाचरणरूपेण संयोज्यते। तत्र च कविः कतिपयैरेव पदैः

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काव्यार्थमपि सूचयति । प्रस्तावनायाश्च प्रमुखमुद्देश्यमत्र कवेः कविकर्मणश्च संक्षिप्तपरिचयप्रदानेन सह सामाजिकानामौत्सुक्यवर्धनम् । प्रस्तावनान्तेन सह प्रथमाङ्कस्य प्रारम्भः सम्बध्यते । प्रायशः सूत्रधारस्य वाक्यमर्थं वा समादाय पात्राणि रङ्गमञ्चं प्रविशन्ति, अथवा प्रथमङ्कस्य प्रथमदृश्यं निर्दिश्य नाटकाभिनयः प्रारभ्यते । प्रस्तावनेयं नाट्याभिनयप्रबन्धकैः नटी-सूत्रधार-पारिपार्श्वकप्रभृतिभिः प्रस्तूयते ।

नाट्यस्य कथानकं तु आधिकारिक-प्रासङ्गिकेतिवृतसंयुक्तमङ्केषु दृश्येषु च विभज्यमानं रङ्गमञ्चेऽभिनीयते । नाट्येषु नाट्यशास्त्रपरम्परामनुसृत्य सन्धिसन्ध्यङ्गसमन्विताः न्यूनतमं पञ्चाङ्काः अधिकतमं दशाङ्का वा संविधीयन्ते । तत्रापि चैकस्मिन्नङ्के स्थान-समय-क्रियाणां तिस्रोन्वितयोऽनिवार्यरूपेण भवन्ति । नाट्यरचनासंविधाने विष्कम्भक-प्रवेशक-चूलिका-अङ्कावतार-अङ्कमुखाश्चेति पञ्चविधा अर्थोपक्षेपका भवन्ति । ते च द्वयो रङ्कयोर्मध्ये संयोज्यन्ते । ये च प्रसङ्गाः प्रत्यक्षरूपेण रङ्गमञ्चेऽभिनेतुमुपस्थापयितुं वा न शक्यन्ते, परन्तु सामाजिकानां नाटकीयकथासूत्रस्यअवबोधनायावश्यकास्तेषां सूचनाव्यवस्था अर्थोपक्षेपकैर्द्वयोरङ्कयोर्मध्ये विधीयते । नाट्याभिनयसमाप्त्यवसरे गीतरूपेण भरतवाक्यगानमपि प्राचीनसंस्कृतनाट्यपरम्परा । अस्मिन्नवसरे आशीर्वादात्मकपद्यैः मङ्गलाशंसनं पात्रैः क्रियते । यद्यपि भरतवाक्यप्रयोगविधानं प्राचीनसंस्कृतनाट्यशास्त्रग्रन्थेषु न क्वचिदपि प्रतिपादितमाचार्यैस्तथापि नाट्यप्रवर्तकमाचार्यं प्रति समादरसूचिकायाः परम्पराया अस्याः पालनं भास-शूद्रक-कालिदासादिमहाकविकृतिष्वलोक्यत एव । उत्तरवर्तिभिश्च सर्वैरेव नाटककारैः परम्परेयमनुसृता । वर्तमानयुगीनाः संस्कृतनाटककाराश्चापि परम्परामेनां परिपालयन्तो दरीदृश्यन्ते नाट्यरचना रससम्भृता भवति । एकश्च रसस्तयाङ्गिरूपेण संयोज्यते, अङ्गरूपेण चान्येषां रसानां संयोजनं सम्पाद्यते । नाटकीयघटनानां सञ्चालनप्रगतिप्रतिपादकाश्च संवादा एव । ते च सर्वश्राव्य-अश्राव्य-नियतश्राव्य (जनान्तिक-अपवारितक) आकाशभाषित-कर्णेनिवेद्यादिभेदेन बहुविधाः भवन्ति । अभिनयश्च कैशिकी-आरभटीभारतीवृत्त्यधीनः ।

**प्रस्तुतनाटकरचनायां वैशिष्ट्यनिर्वाहः—**

"अस्ति-कश्चिद्-वागर्थीयम्" इति नाटकेऽस्मिन् प्राचीननाट्यशास्त्रीयपरम्पराणां रक्षणं कुर्वताऽपि कविना न गतानुगतिकत्वं समाश्रितम् । नाटककारस्य नाट्यरचनायाउद्देश्यमेतदेव यत् कालिदासजीवनवृत्ताभिव्यञ्जिनीं प्राचीनां लोकानुश्रुतिं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रसादिसम्भृतां विधाय सहृदयानां पठनौत्सुक्यचेतसां पाठकानामभिनयावलोकन संलग्नमनसां सामाजिकानां कुतूहलवर्धनद्वारेण मनोरञ्जनस्य प्रस्तुतिर्भवेत् । अर्वाचीननाटचरचनासु प्राचीननाटचशास्त्रीयनियमानां परम्पराणां च सर्वासां तथैव परिपालनं गड्डलिकाप्रवाहेण भवेदेवेति नानिवार्यम् । तथाप्याधुनिकरङ्गमञ्चसन्दर्भेण प्राचीनपरम्पराणां यथासम्भवं रक्षणं भवतु, अथ चाङ्कानां दृश्यानां च संयोजनया सर्वस्य कथानकस्य मनोहार्यभिनयोऽपि सम्भवतु, इति नाटचरचनाकारेण प्रयासो विहितः ।

नाटचारम्भे भगवतो नीलकण्ठस्य स्तुतिः नान्दीद्वारेण स्कन्दपुराणस्यैकेन स्रग्धराछन्दसा प्रस्तुता । अस्मिन् नान्दीप्रयोगे महाकालपूजनरूपमङ्गलाचरणेन सह नाटककथाऽपि सूच्यते । प्रस्तावनायां च नाट्यकथानकस्य नाटककारस्य च संक्षिप्तपरिचयानन्तरं सामाजिकानामौत्सुक्यवर्धनेन सह प्रथमाङ्कस्य प्रथमदृश्यस्य सङ्केतोऽपि वर्तते । नटीसूत्रधाराभ्यामियं प्रस्तावना प्रस्तूयते । नाटकीयकथानकं पञ्चस्वङ्केषु विभक्तम् । अत्र चाङ्केषु क्रिया-स्थान-समयसम्बिन्धिनीनामन्वितीनां सम्यग्योजना विद्यते । नाटकपरिसमाप्तौ च कालिदासजननीमाध्यमेन भरतवाक्यं प्रयुज्य सत्कविभारतीमहिम्न आशंसा संविहिता ।

प्राचीननाटचपरम्पराऽननुरूपमस्मिन् नाटके प्रासङ्गिकीनां कथनामर्थोपक्षेपकाणां च प्रयोगे नावयोजितः । संवादाश्चापि सर्वजनश्राव्या एव सन्ति ।

प्रासङ्गिकीनां कथानां प्रमुखमुद्देश्यम्—आधिकारिककथासमुज्ज्वलीकरणं नायकस्य च फलप्राप्त्यै साहाय्यम् । परन्त्वस्मिन् नाटके नैतादृशी स्थितिः स्थितयो वा सन्ति आधिकारिककथाप्रसङ्गे । तथापि काचन प्रासङ्गिक्यः घटनाः—नर्तक्याः नृत्यम्, इलायाः पूर्वजीवनवृत्तान्तः, कालिदासस्योत्तराखण्डयात्रा इत्यादयोऽवश्यमेव संयोजिताः सन्ति । तथापि ताः मुख्यकथया तथा सम्बद्धाः, यथा पृथग्रूपेण तासां विश्लेषणं न सुकरम् ।

नाटकस्याङ्कयोजनायामङ्कयोर्मध्यवर्तिनः कस्यचित्प्रसङ्गस्य संयोजनमत्र नापेक्ष्यते । अतोऽत्र अर्थोपक्षेपकाणां विष्कम्भकादीनां प्रयोगो न विद्यते ।

अत्र नाटके केवलं सर्वश्राव्यानामेव संवादानां प्रयोगः । अश्राव्याः नियतश्राव्या वा संवादा (जनान्तिकापवारितकादयः) अस्वाभाविका एव । यांस्तावत् संवादान् सुदूरं यावत् प्रेक्षागृहवर्तिनो दर्शका अपि श्रोतुं पारयन्ति, तेषा मेव रङ्गमञ्चस्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पात्रेषु केचन अश्रवणस्याभिनयं कुर्युरिति नितान्तमस्वाभाविकम्। कथाप्रवाह-भङ्गभयात् पद्यानामपि स्वल्प एव प्रयोगोऽस्मिन् नाटके।

नाटकपात्रचरितगतविशेषतानामभिव्यञ्जनायै यथासाध्यप्रयासोऽपि कृत एव। नाटकस्य प्रमुखपात्राभ्यां विद्योत्तमाकालिदासाभ्यां सहैव सहायकपात्राणां सुदर्शन-इला-पार्वती-धूम्रकेतु-गोवर्धनादीनामपि चरितगतविशेषताः सम्यग्रूपेणाभि-व्यञ्जिता।

कालिदासेनाऽत्राश्चर्यजनकरूपेण कवित्वलाभः कृतः, हिमालयस्य चाद्भुत-दृश्यान्यत्राभिव्यञ्जितानीत्यत्राङ्गीभूतो रसोऽद्भुत एव। तत्र च प्रकरणानुसारं वात्सल्य-रौद्र-हास्य-वीर-करुण-संयोगश्रृङ्गार-विप्रलम्भश्रृङ्गारादीनामप्यङ्गभूत-रसानां संयोजना वर्तते। अभिनये च भारतीवृत्तिर्मुख्या। यत्र तत्र च कैशिक्यार-भटी चेति तयोरपि प्रयोगः। नाटकस्याभिनयः सरलतया सार्द्धद्वये त्रये वा घण्टा-परिमितसमये सुखसाध्यो भवेदिति मानमप्यत्र स्वीकृतम्।

**नाटकस्य नामकरणम्—**

प्रस्तुतस्य नाटकस्य नामकरणं तु "अस्ति-कश्चिद्-वागर्थ=" इति प्रश्नस्य मूलभावनामनुसन्धत्ते। मया वृत्तोऽयं वरो नितान्तं जडबुद्धिः' कैश्चिदपि दुष्टैः जनैरुपजापं कुमन्त्रणां चायोज्यातिसन्धीयमानाऽहमस्य मूर्खस्य कूटपाशे पतितेति महत्या हृदयविदारिण्या पीडया सम्पीड्यमाना राजकुमारी विद्योत्तमा कालिदासं गृहान्निष्कासयति। कथयति च सा—विद्याध्ययनं कृत्वा कार्यकर्तृत्वप्रतिभा-समन्विते प्रतिनिवृत्ते विदुषि त्वयि मम प्रश्नोऽयं भविष्यति—"अस्ति-कश्चिद्-वागर्थः" ?। प्रश्नस्य समुचिते समाधाने सत्येव भवान् मे वक्षस्यान्तः प्रवेशा-धिकारस्यार्हो भविष्यति। कालिदासेन विद्याध्ययनं कृत्वा विद्याप्रकर्षोऽधिगतः कवित्वं चापि। राजकुमारीं लभमानेन तेन तस्याः प्रश्नः समुचितरूपेणैवं समा-साधितः—"अस्ति-कश्चिद्-वागर्थ इति त्रिभिः पदैः त्रीणि काव्यानि कुमारसम्भव-मेघदूत-रघुवंशानि विरचितानि।" अस्मिन्नेव प्रश्ने नाटकीयकथानकबीज-समुत्पत्तिर्भवति, अत्रैव च नाटककथानकस्य फलागमः। अत एतन्नामकरणं सर्वथा समुचितमेव।

**नाटककथानकम्—**

प्रस्तुतस्य नाटकस्य कथानकमत्र संक्षेपेण प्रस्तूयते—" दक्षिणकोसलजनपदस्य

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महाराजसुदर्शनस्य सुतायाः विद्योत्तमायाः प्रतिज्ञा प्रथिता बभूव—"यो मां जयति शास्त्रार्थे स मे भर्ता भविष्यति"। बहवो विद्वांसस्तत्र समाययुः। परं ते शास्त्रार्थे पराजयमवाप्य हृदयेषु परिसन्तप्यमानाः खिद्यमानाः शास्त्रार्थभवनान्निष्कासिताः न्यवर्तन्।

**प्रथमोऽङ्कः—**

धूम्रकेतुगोवर्धननामानौ द्वौ नवस्नातकौ शास्त्रार्थे विद्योत्तमया पराजयमवाप्य समुत्पन्नखेदरोषावेशविवशमानसौ निश्चयं चक्रतुः—"विद्यामदविह्वलायाः राजकन्यायाः विवाहः केनचिदपि जडबुद्धिना मूर्खेण कारणीयः"। तत्रैव देवग्राम-निकटवर्तिनि वने कालिदासनामा महामूर्खः जनन्या सार्द्धमरण्यमागतः काष्ठच्छेदनं कुर्वंल्लक्षितः। विद्वद्वरेण्यस्य नैयायिकस्य शिवदासस्य पुत्र आसीदयम् परं शैशवे शिरसि प्रचण्डाघातेन स जडबुद्धिः समजायत। आश्रयभूतस्य विटपिविटपस्य छेदनेन भूमौ पतितं तमवलोक्य—अस्मात् काष्ठभारिकादन्योऽधिको मूर्खः को भविष्यतीति विचारं कृत्वा तौ पण्डितौ कालिदासं विविधं प्रलोभ्य पाठं च पाठयित्वा सुदर्शननगरीमानीतवन्तौ।

**द्वितीयोऽङ्कः**

आचार्यश्रेष्ठसुवेशसुशोभितोऽसौ मूर्खजडमतिः कालिदासो दर्शनाचार्यनाम्ना आचार्यरूपेण परिचायितः। निवेदितं च पण्डिताभ्यां ताभ्याम्—मौनव्रतित्वात् सङ्केतैरेवाचार्यमहोदयः शास्त्रार्थं करिष्यति। कालिदासस्य यौवनेन रूपसम्पदा च प्रमुग्धा विद्योत्तमा तमतिशयेन विद्यावन्तमवगच्छन्ती तथैव स्वीचक्रे। सङ्केतैरेव च विद्योत्तमया संप्रयुक्तानां प्रश्नानामुत्तराणि दर्शनाचार्यरूपधारिणाकालिदासेन सङ्केतैरेव प्रस्तुतानि। धूम्रकेतुना गोवर्धनेन च तेषामुत्तराणां तथा व्याख्या कृता, यथा विद्योत्तमा परितुष्टा बभूव। स्वकीयं पराजयमङ्गीकृत्य दर्शनाचार्य-मतिशेन विद्याप्रकर्षवन्तं गणयन्ती सा तस्य ग्रीवां वरमालयाऽलङ्कृत्य तं भर्तृ-रूपेण वव्रे।

**तृतीयोऽङ्कः—**

विवाहसंस्कारानन्तरं सा राजकुमारी शयनकक्षे पाणिग्रहीतारं प्रतीक्षमाणा उत्कण्ठानिर्भरा अवर्तत। तत्र तस्याः प्रियसहचरी इलाप्यासीत्। सखीभिः

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सेविकाभिश्चाकृष्यानीयमानस्य पत्युर्वदने मूर्खताचिह्नान्यवलोक्य विस्मिताऽपि सा प्रणयभरनिर्भरा सती मधुरप्रणयगर्भवचोभिस्तस्य स्वागतं विदधौ । परन्तु दर्शनाचार्यस्य मौर्ख्यगर्भग्राम्यभाषामाकर्ण्य प्रथमं तावच्चकितचकिता भीतभीता चापि । तत्क्षणमेव रोषविवशा सा सञ्जाता । सकलं च पण्डितवृत्तान्तं निशम्य, अतिशयेनाऽहं विप्रलब्धा वञ्चिताछलिता च ताभ्यां धूर्तपण्डिताभ्यां, याभ्यामयं जडबुद्धिर्मम महामूर्खः काष्ठभारिको मे पतिः कृतः, इति क्रोधसंरक्तनयना बभूव । इलया पुनः पुनरप्यनुरुध्यमना सा तं काष्ठभारिकं निर्भर्त्स्य गृहान्निष्कासयामास । उवाच च—"विद्योत्तमा विद्यावत एव सम्भवति" । इदमपि कथितं तेन—"त्वामहं प्रतीक्षिष्ये । विद्याध्ययनं कृत्वा गृहद्वारं समागते त्वयि प्रश्नमेतं प्रक्ष्याम्यहम्—अस्ति-कश्चिद्-वागर्थः ? प्रश्ने समीचीनरूपेण समासाधिते सत्येव तव मे कक्षस्यान्तः प्रवेशस्याधिकारः" ।

चतुर्थोऽङ्कः—

विद्योत्तमया रोषाविष्टहृदयया स वराकः पाणिग्रहीता निष्कासितः, परं सा भारतीयनारी पातिव्रतधर्मपरायणा पश्चात्तापेन सततं दग्धहृदयया तमन्वेषमाणाऽवर्तत । इलया सह स संविशन्ती सा तमेव चिन्तयामास । एकस्मिन् समये प्रमदवने कदलीमण्डपे इलाविद्योत्तमयोर्विस्रम्भवार्ता बभूव-कालिदासनामा कश्चिन्महाकविः भारतवर्षे परां प्रसिद्धिमधिगच्छति, यश्च स्वकाव्यरचनाभिश्चतसृसु दिक्षु स्वकीयां विमलां कीर्तिं प्रथयति । श्रव्यकाव्यैः सह तेन केषाञ्चिन्नाटकानामपि रचना संविहिता । विद्योत्तमया तानि काव्यानि नाटकानि चोज्जयिनीतो महता परिश्रमेण धनव्ययेन चानायितानि । नाटकानामवलोकनेन चमत्कृतयेलया प्रस्तावः समुपस्थापितो, यदेतेषामभिनयो राजकीयाभिनयशालायां संयोजनीयः । विद्योत्तमया प्रोक्तम्—"पितृचरणैरसौ कविरत्रैव निमन्त्रितः । यदि च नाटकप्रणेता कविरेवैतेषां नाटकानामभिनयस्य निर्देशनं कुर्यात्, तदैवायमभिनयोऽधिकतरं प्राणमयः प्रभावशाली सजीवश्च भविष्यति" । तदैव चेट्या इरावत्या समागत्य सूचना प्रदत्ता—"महाकविः कालिदासो नगरस्य बाह्यतोरणद्वारभूमिमुपस्थितः । ससमारोहं सस्वागतं च स कन्यान्तःपुरसमक्षमधो राजमार्गमतिक्रम्य राजप्रासादमुख्यद्वारं समागमिष्यति' । इलाविद्योत्तमे महाकवेः दर्शनार्थं शयनकक्षगवाक्षमुपासर्पतुः ।

पञ्चमोऽङ्कः—

शयनकक्षगवाक्षाद् बहिर्वदन-मानीय इला स्यन्दनमारुह्य राजमार्गेण समागच्छन्तं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महाकविं कालिदासं विद्योत्तमां दर्शयामास। विद्योत्तमाऽपि गवाक्षान्मुखं सुदूरमानीयौत्सुक्यगर्भनयनाभ्याममनिमिषं तमवलोकयमास। कवेः स्वागतार्थं सकलमेव नगरं स्वलङ्कृतं सुसज्जितं चावलोक्यते स्म। जनपदस्य नगरस्य च प्रजाजनैः राजमार्गः समाकीर्ण आसीत्। शनैः-शनैः समीपमागच्छन्तं रथारूढं महाकविं निकषा सम्प्राप्तमिला पर्यचिनोद्, यदयं तु स एव काष्ठभारिकः। राजकुमारी चाऽपि तं परिचित्य ससम्भ्रमं सहसैव विचेतनेव सञ्जाता, इलया च समाश्वासिता। एतस्मिन्नेवान्तरे चेट्या इरावत्या तत्रागत्य सूचितम्—"महाकविः प्रथमं तावद् राजकुमार्या एव दर्शनमभिलषति"।

निश्चयेनायं कालिदासः स एव काष्ठभारिकः, कथमपि विद्याध्ययनं कृत्वा विद्वत्वं कवित्वं च समुपलभ्य कालिदासनाम्ना महाकविरूपेण जगति प्रथित इति विचार्य राजकुमारी विद्योत्तमा इलामादिदेश—"द्वारं पिधेहि। अस्ति-कश्चिद्-वागर्थं—इति प्रश्ने समुचितरूपेण समासाधिते सत्येव त्वया द्वारमुद्घाटनीयम्"। इलया तथैव विहितम्। कालिदासस्य उत्तरेण सन्तुष्टया तया द्वारमपावृतम्। कक्षान्तः प्रवेशनानन्तरमिलया विद्योत्तमया च पृष्टेन तेन कालिदासेन स्वकीयः सकल एव पूर्वो वृत्तान्तो वर्णितः। तेन प्रोक्तम्—

राजकुमार्याः शयनगृहान्निर्गत्याहं तदेव वनं सम्प्राप्तो, यस्मात्तौ धूर्तपण्डितौ मामत्रानयताम्। तत्र झञ्झावातेनोत्पाटितस्य शाकवृक्षस्य स्थूलविटपेन शिरसि, प्रहतस्य मे सकलं जडत्वं मूर्खत्वं वा सर्वथा तिरोहितम्। तदनन्तरं महर्षेः कुलपतेः वामदेवस्य गुरुकुलाश्रमे पञ्चवर्षं यावद् विद्याध्ययनं कृत्वा मया काव्यानां रचना समारब्धा। तत्र विद्योत्तमाया एव समुज्ज्वलं कान्तिमच्च वदनं सदा मम हृदये सम्प्रतिष्ठितं बभूव, यच्च मे सहृदयहृदयरञ्जनक्षमाणां काव्यानां नायिकासु सततमभिव्यक्तं सञ्जायते। मया द्वयोः नाटकयोः—मालविकाग्निमित्रस्य विक्रमोर्वशीयस्य च रचना पूर्णा कृता। अभिज्ञानशाकुन्तल नाटके प्रथमाङ्कस्यापि रचना कृता। षड्ऋतूनधिकृत्य मया ऋतुसंहारनामकं गीतिकाव्यमपि विरचितम्।

राजकुमार्याः प्रश्नो "अस्ति-कश्चिद्-वागर्थः" सततमेव मे मनः समालोडयन् निर्मथ्नन् आसीत्। अतः मया अस्तिपदेन कुमारसम्भवस्य, वागर्थपदेन च रघुवंशस्य रचना प्रारभ्यते। कश्चित् पदेन मया मेघदूतनामकं गीतिकाव्यं विरचितम्। मेघदूतं विरचयितुकामेन मया भागीरथी प्रभवस्य हिमवतो यात्रा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कृता । तत्र मन्दाकिनी-सरस्वत्योः सङ्गमान्नातिदूरवर्तिनि तटे कालीमन्दिरेऽहं स्वप्नमिममवलोकितवान् । इयं यक्षाधिपस्य कुवेरस्य नगरी अलकापुरी वर्तते । अत्र चाहं यक्षरूपेण निवसामि । इयं राजकुमारी विद्योत्तमा यक्षिणीरूपेण वर्तमाना नित्यं मां प्रसादयति । तदनन्तरं निवर्त्य मया रामगिरिशिखरसमारूढेनावलोकितम्—गिरिशिखरमिदं मेघैराश्लिष्यते । कान्ताविरहगुरुणा शोकेन सन्तप्यमानेन मया भवत्याः यक्षिणीरूपायास्तत्रैवालकापुर्यां परिकल्पनां कृत्वा मेघैः सन्देशं प्रेषितुमीहितम् । मेघदूतेऽस्मिन् गीतिकाव्ये भावानामेतेषामेव परिकल्पना । कश्चित्पदेन चेदं प्रारभ्यते ।

स्वकीयं वृत्तान्तं श्रावयित्वा महाकविः कालिदासः पुनरपि प्रोवाच—"आवामितो राजसभां गत्वा ते जननीजनकाभ्यां राजपरिषत्सभासदस्यैश्चाभिनन्द्यमानौ भविष्यावः । तदनन्तरं देवग्रामं स्वजननीसकाशं यास्यावः ।

एतच्छ्रुत्वा वाष्पपरिपूर्णनयना राजकुमारी समसूचयद् यद् भवतां जननी स्वसुतं परिमार्गयन्ती एतन्नगरं समायाता । अस्माभिः बहुशोऽप्यनुरुध्यमाना सा नाऽत्रावस्थातुमङ्गीचकार । निशीथिन्यामेव निभृतं सा क्वचिदपि निष्क्रान्ता । जननीवृत्तान्तश्रवणव्याकुलेन कालिदासेन तस्मिन्नेव काले बहिः कश्चित् कोलाहलः संश्रुतः । काचिन्मलिनचीवरवस्त्रावृता वृद्धा करियेति नामानं पुत्रमन्विष्यति । बालकास्तां परिवृत्य कोलाहलं कुर्वन्तीति समाचारः बहिर्गतया सेविकया समानीतः । सैव मे माता, इति कालिदासो बहिर्गन्तुमुद्यतो बभूव । इलया समानीतायां वृद्धायां मातापुत्रयोः श्वश्रूवध्वोश्च सम्मेलनमभूत् । तदैव कञ्चुकिनाऽऽनीतं राजसन्देशं निशम्य ते सर्वे राजसभां गन्तुमुद्यताः बभूवुः ।

**लेखकस्य निवेदनम्—**

नाटकस्यास्याभिनयः प्रथमं तावत् पिथौरागढ़नगरे राजकीयस्नातकोत्तरमहाविद्यालयस्य संस्कृतच्छात्रैः सप्तषष्ट्युत्तरैकोनविंशतिशततमे (१९६७) वर्षे कालिदास-जयन्त्यवसरे समुपस्थापितः । तदनन्तरं चेदं त्रिसप्तत्युत्तरैकोनविंशतिशततमे (१९७३) वर्षे नैनीतालनगरे राजकीयठाकुरदेवसिंहविष्टमहाविद्यालयस्य संस्कृत-परिषदो वार्षिके समारोहे संस्कृतच्छात्रैरभिनीतम् । अथ च गढ़वालविश्वविद्यालये द्व्यशीत्युत्तरैकोनविंशतिशततमे (१९८२) वर्षे संयोजितायामखिलभारतीयसंस्कृत-संगोष्ठ्यामामन्त्रिताः विद्वांसोऽभिनयमेतदवलोकयेयुरिति रसादिभावनाभावित-

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चेतसां रसास्वादनजनितहर्षनिर्भरहृदयानां सुहृदामनुरोधेन प्रकाशनयोग्यलिपिता-मधिगतमिदं नाटकं सहृदयपाठकजनसमक्षं प्रस्तूयते ।

यदि चेयं रचना कालिदाससम्बन्धिलोकानुश्रुतिमधिकृत्य विरचिता पठ्यमाना श्रूयमाणाणा च सहृदयहृदयरञ्जनक्षमा तेषां हृदयेषु रङ्गमञ्चेऽभिनयदर्शनस्या-भिलाषस्य जनने समर्था भवति, तदैव रचयितुरस्य कृतिः सार्थका परिश्रमश्च सफलः । न किञ्चिदपि कथयितुं समर्थो लेखकः स्वगुणदोषसमालोचने । पाठकाः श्रोतारश्च समालोचकाः भवेयुः । आपरितोषाद् विदुषां प्रयोगविज्ञानमिदं साधु न मन्ये । तथाप्याशास्यते सचेतसः श्रद्धामत्र विधास्यन्त्येव ।

लेखकः

———

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# भूमिका

प्राचीन भारतीय मनीषियों, विद्वानों और कवियों की कृतियों से सामान्य रूप से उनके जीवन-वृत्त, समय' स्थान आदि का का परिचय जानना सरल नहीं है। उनकी कृतियों की व्याख्या करने वाले विद्वानों ने भी उन तथ्यों को इस प्रकार नहीं बताया, जिससे कि उनका वृतान्त ठीक-ठीक जाना जा सके। केवल कुछ लोक-अनुश्रुतियाँ कहीं सुनी जाती हैं। और किंवदन्तिया प्राचीन साहित्य में मिलती हैं। परन्तु उनका कोई प्रमाण नहीं हैं। यद्यपि बाण, बिह्लण आदि कुछ कवियों के काव्यों में उनके वंश, जीवन-वृत्त आदि परिचय है, तथापि वह अलौकिक वृतान्तों से इस प्रकार भरा है, कि यथार्थ निर्णय सरल नहीं है।

**कालिदास के सम्बन्ध की अनुश्रुति—**

महाकवि कालिदास के सम्बन्ध में ऐसी ही स्थिति है। उनके काव्यों-रघुवंश, कुमारसम्भव, मेघदूत और ऋतुसंहार में रचयिता का नाम भी कहीं नहीं मिलता अथवा अभिव्यक्त होता है, वंश, जीवनवृत्त, स्थान, समय आदि का तो कहना ही क्या है। नाटकों की प्रस्तावनाओं से भी केवल यही विदित हो सकता है, कि इन कृतियों की रचना किसी कालिदास नामक कवि ने की थी और वे रस-भावों की दीक्षा के गुरु विक्रमादित्य के समकालीन थे। भास सौमिल्लक कविपुत्र आदि कवि इनसे पूर्व हुए थे, येविक्रमादित्य कौन थे, किस समय हुये, इनकी राजधानी कहाँ थी ये सभी बातें विवादास्पद है। कुछ समालोचकों का विचार है कि वे ईसा पूर्व द्वितीय शताब्दी में हुये। कुछ उनको ईसा पूर्व प्रथम शताब्दी का, कुछ ईसा पूर्व चतुर्थ -पञ्चम शताब्दी का और कुछ छठी शताब्दी का मानते हैं। इस प्रकार विविध मतों का अवलम्बन करके ही कालिदास के समय की गणना की जाती है। कुछ वर्तमानकालीन समालोचकों का कालिदास के सम्बन्ध में कथन है कि नाटकों का रचयिता कालिदास श्रव्य-काव्यों के रचयिता कालिदास से भिन्न है।

राजशेखर ने शृंगार और ललित रचनाओं के लिये तीन कालिदासों का वर्णन किया है। परन्तु इस प्रकरण में उसने यह नहीं बताया कि रघुवंश, अभिज्ञान-शाकुन्तलम् आदि का रचयिता कवि कौन सा कालिदास है। इस प्रकार

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कालिदास के समय का निर्धारण करने के साथ ही उनके स्थान, जीवन-वृत्त, आदि के सम्बन्ध में भी बड़ी भारी अव्यवस्था विद्वानों के समक्ष सदा उपस्थित रहती है।

कालिदास के विषय में बहुत सी अनुश्रुतियां और किम्वदन्यिां लोक-कथाओं के रूप में प्रसिद्ध है। प्राचीन लोक-साहित्य में भी जहाँ-तहाँ उनके विषय में कथन मिल जाते हैं। परन्तु उनकी सत्यता सिद्ध करने के लिये कोई प्रमाण नहीं है। आधुनिक समालोचक उनको काल्पनिक ही कहते हैं। उन सभी किम्वदन्तियों का वर्णन अति विस्तृत होने तथा प्रासंगिक भी न होने से नहीं किया जा रहा।

इनमें से एक अनुश्रुति महाकवि कालिदास द्वारा कवित्त्व-प्रतिभा प्राप्त करने के विषय में है। यह रम्य और सहृदयों के मनों को अच्छी लगने वाली है। सुना जाता है कि कालिदास बचपन से ही बहुत मूर्ख, मूढ़, प्रतिभारहित तथा जडबुद्धि थे। इस समय भारतवर्ष के मध्य देश के अलंकारभूत राजा सुदर्शन की कोई विद्योत्तमा नाम की पुत्री विद्या के गर्भ से गर्वीली, सौन्दर्य से संसार की सभी युवतियों से श्रेष्ठ, देखने में सुन्दर और रमणीय थी। उनकी घोषणा लोक में प्रसिद्ध हुई—"जो मुझ को शास्त्रार्थ में जीत लेगा, वही मेरा पति होगा"। बहुत से युवा पण्डित और विद्वान् उससे विवाह करने की कामना से आये, परन्तु राजकन्या से शास्त्रार्थ में पराजित हुये। अपमान की अग्नि से हृदय में जलते हुये वे दुःखी होकर लौट गये।

उसके पश्चात् हृदय और मन में पराजय जनित अपमान को सहन न करते हुये कुछ पण्डितों ने यौवन और सौन्दर्य से सम्पन्न, परन्तु अति मूर्ख कालिदास को पाया। उन्होंने षड्यन्त्र करके संकेतों द्वारा विद्योत्तमा के साथ शास्त्रार्थ करा कर उन संकेतों की विविध प्रकार से व्याख्या की। कालिदास के यौवन और सौन्दर्य से मुग्ध राजकन्या ने अपनी पराजय को स्वीकार करके उसी मूर्ख कालिदास को पति के रूप में स्वीकार कर लिया।

प्रथम मिलन के समय में ही उस कालिदास को महामूर्ख और विद्या तथा प्रतिभा से शून्य जान कर वह राजकुमारी हृदय को विदीर्ण करने वाली मन की व्यथा से बहुत अधिक व्यथित हुई। क्रोध से विवश होकर विद्योत्तमा ने उस मूर्ख कालिदास को राजभवन से निकल जाने के लिये वाध्य किया और कहा कि विद्योत्तमा का प्रेम विद्वान् से ही हो सकता है। विद्वत्ता और कवित्त्व से उसके समृद्ध होने पर दोनों का मिलन सम्भव है। तभी वह उसका स्वामी है। मित्रता समान वल और बुद्धि वालों में ही होती है।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नव-परिणीता पत्नी से इस प्रकार तिरस्कृत होकर और झिड़का जाकर वह विद्योत्तमा का पति कालिदास तीव्र अपमान की वेदना हृदय में धारण करके किसी जंगल में पहुँचा। वहाँ भगवती काली की उपासना और पूजा करके उनकी कृपा से वह विद्वत्ता और कवित्व से अलंकृत हुआ। उसके पश्चात् जब वह वापिस आया तो विद्योत्तमा की अभिलाषा से उसके कक्ष के द्वार पर गया। द्वार के खोलने से पहले ही राजकुमारी ने पूछा—"अस्ति कश्चिद् वागर्थः" (शब्द और अर्थ को कुछ प्राप्त किया है कुछ काव्यरचना की शक्ति भी प्राप्त की है ?)। कालिदास के उत्तरों से हृदय और मन में सन्तुष्ट होकर राजकुमारी ने उसको आदर के साथ अपने हृदय में प्रिय के रूप में स्वीकार कर लिया।

"अस्ति कश्चिद् वागर्थः", इस प्रश्न के तीन पदों को लेकर कालिदास ने क्रमशः कुमारसम्भव मेघदूत और रघुवंश नाम की तीन काव्यों की रचना की। काली की कृपा को प्राप्त करके वह संसार में महाकवि कालिदास के रूप में प्रसिद्ध हुआ।

**नाटक के कथानक के संयोजन में लेखक की कल्पनायें—**

कालिदास के विषय की यह कथा यद्यपि एक लोक-अनुश्रुति ही है और इसकी कोई ऐतिहासिक प्रामाणिकता नहीं है, तथापि यह कथा निश्चित रूप से मनोरंजक, रोचक और सहृदयों के हृदयों को आह्लादित करने वाली है। यहाँ इस लोक-किम्वदन्ती को बुद्धि और कल्पनाओं के द्वारा रस-गुण-अलंकार आदि से अलंकृत करके और अभिनय के गुणों से विभूषित करके नाटक के रूप में सहृदय जनों के हृदयों की प्रसन्नता के लिये तथा लोक के रञ्जन के लिये प्रस्तुत किया है। इस नाटकीय कथानक में केवल स्वयंवर की शर्त, राजकुमारी विद्योत्तमा और कालिदास का नाम ये कुछ वस्तुयें ही प्राचीन किम्वदन्ती से सम्बन्धित है। अन्य सब काल्पनिक हैं।

प्राचीन प्रसिद्ध किम्वदन्ती में कालिदास द्वारा काली देवी की उपासना से कवित्व-प्राप्ति का कथन किया गया है। परन्तु कोई जडबुद्धि इस प्रकार देवता की उपासना करके विद्वत्ता और कवित्व को कैसे प्राप्त कर सकता है। कविता का बीज प्रतिभा ही है, जो जन्मान्तरों से प्राप्त विशेष संस्कार है। अतः कथानक को अधिक स्वाभाविक बनाने के लिये कालिदास के सिर पर आघात की कल्पना की गई है। वैज्ञानिकों का कथन है कि यदि किसी बालक के सिर पर जोरदार आघात होकर उसकी बुद्धि और प्रतिभा कुण्ठित हो जावे अथवा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नष्ट हो जावे, तो सम्भव है कि पुनः उसी प्रकार का आघात होने पर वह पहले जैसा ही हो जावे। इस प्रकार की कल्पना कालिदास सम्बन्धी किम्वदन्ती को अधिक स्वाभाविक बना देती है।

**नाटक के संयोजन की विशेषतायें—**

नाटक के विशिष्ट गुण उनका अभिनेय होना तथा रस से समृद्ध होना आदि है। नाटक को दृश्य काव्य कहा जाता है। रंगमंच पर अभिनीत होकर वे सहृदयों के हृदयों को रसास्वादन करा कर परम आह्लादित करते हैं। सहृदय दर्शक नाटकीय घटनाओं को प्रत्यक्ष रूप से देखकर रसास्वादन करके परम आह्लाद का अनुभव करे, इसी हेतु महाकवि नाटकों की रचना में मन लगाते हैं। यदि इन नाटकों में अभिनेयता का गुण न हो और इनका रंगशालाओं में अभिनय न कराया जा सके तो इस अवस्था में दृश्य काव्यों (नाटकों) तथा श्रव्य काव्यों में अन्तर ही क्या रह जायेगा। प्रस्तुत नाटक रंगशालाओं में अभिनीत किया जाकर सहृदयों के हृदयों को वशीभूत करके उनको रसास्वादन से उत्पन्न आनन्द में निमग्न कर दे, इसी हेतु इस नाटक-रचना का प्रयास किया गया है।

रूपकों में स्त्रियों और निम्न कोटि के पक्ष संवादों में शौरसेनी या अपने देश की भाषा का प्रयोग करे, यह भरतनाट्यशास्त्र का निर्देश है। परन्तु प्रायः २५०० वर्ष पहले इस नियम का उसी प्रकार पालन करना अन्धे के पीछे चलने के समान है। स्त्रियाँ और निम्न कोटि के जन उस प्रकार विद्या में पारंगत होकर संस्कृत भाषा बोलने में समर्थ नहीं होते, यही कल्पना करके भरत ने उस प्रकार करने का निर्देश दिया था। भरत का विचार था कि उनके संवादों में प्राकृत आदि देश-भाषाओं का प्रयोग करना ही स्वाभाविक है। परन्तु उस तात्पर्य को न जानते हुये भेड़-चाल के वशीभूत होकर कुछ कवि और विद्वान् वर्तमान समय में भी संस्कृत नाट्य-रचनाओं में रूढ़िवादी होकर कृत्रिम रूप से प्राकृत भाषा का प्रयोग करके पाण्डित्य का प्रदर्शन करते हुये दिखाई देते हैं। और क्या, विद्योत्तमा के समान सरस्वती के अवतार के रूप से अवतीर्ण नारियों के संवादों में मूर्ख मनुष्यों के समान प्राकृत भाषाओं का उच्चारण क्या समुचित है। सभी मनुष्यों के द्वारा आदरणीय तथा विद्वत्ता एवं कवित्व आदि गुणों से विभूषित नारी वर्ग के प्रति निम्न कोटि के पात्रों के समान प्राकृत भाषाओं को आरोपित करना लज्जास्पद ही है। यह विचार कर इस नाटक में स्त्रियाँ संस्कृत

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भाषा का ही प्रयोग करती है। अतः यहाँ सब स्थानों पर ललित, सरल और शुद्ध संस्कृत भाषा का ही प्रयोग किया गया है। केवल कालिदास की मूर्खता की अवस्था में संयोजित संस्कृत भाषा उस प्रकार की सँवरी हुई नहीं है। वह टूटी-फूटी है।

भारतवर्ष में प्राचीन समय में नाट्य-रचना की यह परम्परा रही थी और नाट्यशास्त्रकारों ने भी इसको प्रतिपादित किया था कि नाट्य-रचना के बाह्य संविधान में नान्दी, प्रस्तावना, अङ्क दृश्य, अर्थोपक्षेपक और भरतवाक्य का समुचित रूप से संयोजन किया जावे नान्दीपाठ का संयोजन मंगलाचरण के रूप में किया जाता है। उसमें कुछ पद नाटकीय कथा की भी सूचना देते हैं। प्रस्तावना का प्रमुख उद्देश्य है कि वह कवि की कृति और कवि का स्वरूप परिचय देने के साथ-साथ सामाजिकों के औत्सुक्य को बढ़ावे। प्रस्तावना का अन्तिम भाग नाटक के प्रथम अंक के साथ सम्बद्ध होता है। प्रायः सूत्रधार के वाक्य को या उसके अर्थ को लेकर पात्र का प्रवेश कराया जाता है। अथवा प्रस्तावना के अन्त में प्रथम अंक के प्रथम दृश्य का निर्देश करके नाटक का अभिनय प्रारम्भ होता है। प्रस्तावना को अभिनय के प्रबन्धक सूत्रधार, परि-पार्श्वक, नटी आदि द्वारा प्रस्तुत किया जाता है।

नाटक के आधिकारिक-प्रासंगिक कथानक का अंकों और दृश्यों में विभाजन करके रंगमंच पर अभिनय किया जाता है। नाट्यशास्त्रीय नियमों की परम्परा के अनुसार नाटक में सन्धियों सन्ध्यंगों से सम्पन्न ५ से १० तक अंक होने चाहिये। एक अंक में स्थान-समय-क्रिया की अन्विति अवश्य होनी चाहिये। नाट्यरचना संविधान में विष्कम्भक-प्रवेशक-चूलिका-अंकावतार-अंकमुख ये पाँच प्रकार के अर्थोपक्षेपक होते हैं। इनका संयोजन दो अंकों के मध्य किया जाता है। जिन घटनाओं को प्रत्यक्ष रूप से रंगमंच पर अभिनीत या प्रस्तुत नहीं किया जा सकता, परन्तु सामाजिकों के लिये नाटकीय कथासूत्र को बतलाने के लिये वे आवश्यक हैं, उनको सूचित करने के लिये अर्थोपक्षेपकों का विधान दो अङ्कों के मध्य में किया जाता है। नाटक का जब अभिनय समाप्त हो रहा होता है, उस समय संस्कृत नाटकों में गीत के रूप में भरतवाक्य के गायन की परम्परा रही है। इस अवसर पर आशीर्वादात्मक पद्यों के द्वारा मंगल की आशा की जाती है। यद्यपि इस भरतवाक्य के प्रयोग का विधान प्राचीन नाट्यशास्त्रीय

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ग्रन्थों में नहीं है, तथापि इस परम्परा का पालन, नाटच-प्रवर्तक आचार्य भरत के प्रति आदर प्रदर्शित करने के लिये, भास-कालिदास आदि महाकवियों की कृतियों में दृष्टिगोचर होता है। वर्तमान समय के नाटकों तक में इस परम्परा का पालन हुआ है।

नाटचरचना को रस से सम्भृत होना चाहिये। उसमें एक प्रधान रस को अंगी करके उसके साथ अन्य अंग रसों का संयोजन किया जाता है।

नाटकीय घटनाओं की गति मुख्य रूप से संवादों द्वारा होती है। ये सर्वश्राव्य, अश्राव्य, नियतश्राव्य (जनान्तिक और अपवारितक), आकाशभाषित, कर्णनिवेद्य आदि भेदों से अनेक प्रकार के होते हैं। कैशिकी, आरभटी और भारती तीन वृत्तियों द्वारा अभिनय होता है।

**प्रस्तुत नाटक की रचना में विशिष्टताओं का निर्वाह—**

"अस्ति कश्चिद् वागर्थीयम्" नाटक में इन प्राचीन नाटचशास्त्रीय सभी परम्पराओं का पालन, करते हुये भी कवि ने भेड़-चाल नहीं की है। नाटक की रचना में लेखक का उद्देश्य यही है कि कालिदास के सम्बन्ध की एक प्राचीन लोक-अनुश्रुति को रस आदि से सम्भृत करके इसको पढ़ने के लिये उत्सुक पाठकों और अभिनय देखने में मन लगाने वाले सामाजिकों के समक्ष प्रस्तुत करके उनके कौतूहल को उद्दीप्त करके मनोरञ्जन प्रस्तुत किया जावे। आधुनिक समय में जिस प्रकार के नाटकों की रचना हो रही है, उसमें इन प्राचीन नाटचशास्त्रीय सभी नियमों का पालन भेड़-चाल के समान ही हो, यह अनिवार्य नहीं रह गया है। तथापि आधुनिक रंगमंच के सन्दर्भ के साथ प्राचीन परम्पराओं की यथासम्भव रक्षा हो सके और अंकों तथा दृश्यों के संयोजन से सारे कथानक का मनोहारी अभिनय भी हो जावे, इस प्रकार का प्रयत्न कवि द्वारा किया गया है।

नाटक के प्रारम्भ में नान्दी के रूप में भगवान् महाकाल शिव की स्तुति स्कन्द-पुराण के एक श्लोक द्वारा की गई है। इस नान्दी में महाकाल के पूजन रूप मंगलाचरण के साथ ही नाटकीय कथानक की सूचना भी मिलती है। प्रस्तावना में नाटक के कथानक तथा नाटककार का संक्षिप्त परिचय देने के साथ ही सामाजिकों के औचित्य की वृद्धि करते हुये अन्त में प्रथम अंक के प्रथम दृश्य का

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संकेत है। सूत्रधार और नटी इस प्रस्तावना को प्रस्तुत करते हैं। नाटकीय कथानक पाँच अंकों में विभक्त है। इनमें क्रिया, स्थान और समय की अन्वितियों का उचित आयोजन है। अन्त में कालिदास की माता के माध्यम से भरतवाक्य के द्वारा सत्कवियों की भारती की महिमा की आशा की गई है।

प्राचीन नाट्य-परम्परा से कुछ हटकर इस नाटक में प्रासंगिक कथाओं और अर्थोपक्षेपकों का कथन नहीं है। संवाद भी केवल सर्वश्राव्य ही है।

प्रासंगिक कथाओं का मुख्य उद्देश्य है—आधिकारिक कथा को समुज्ज्वल करना और लक्ष्य प्राप्ति में नायक की सहायता करना। परन्तु इस नाटक की आधिकारिक कथा के लिये इस प्रकार की स्थितियाँ नहीं हैं। तथापि कुछ प्रासंगिक घटनायें—नर्तकी का नृत्य, इला के पूर्व जीवन का वृत्तान्त; कालिदास की उत्तराखण्ड यात्रा आदि, अवश्य ही संयोजित हैं। तथापि मुख्य कथानक से ये इस प्रकार सम्बद्ध हैं कि उनको पृथक् रूप से देखना सम्भव नहीं है।

नाटक के अंकों का इस प्रकार संयोजन है कि अंकों के मध्यवर्ती किसी घटना के संयोजन की अपेक्षा नहीं है। अतः इस नाटक में अर्थोपक्षेपकों, विष्कम्भक आदि का प्रयोग नहीं है।

इस नाटक में केवल सर्वश्राव्य संवाद ही प्रयुक्त हैं। अश्राव्य या नियतश्राव्य संवाद (जनान्तिक-अपवारितक) अस्वाभाविक प्रतीत होते हैं। जिन संवादों को दूर तक तो प्रेक्षागृह में उपस्थित दर्शक सुन रहे हो, उनको रंगमंच पर ही उपस्थित कुछ पात्र न सुनने का अभिनय करे, यह नितान्त अस्वाभाविक है। कथा के प्रवाह के अवरोध के भय से यहाँ पद्यों का प्रयोग भी अत्यल्प ही है।

नाटक के पात्रों की चरितगत विशेषताओं को उभारने का यथासाध्य प्रयास हुआ है। नाटक के प्रमुख पात्रों—कालिदास और विद्योत्तमा के साथ ही अन्य सहायक पात्रों—महाराज सुदर्शन, इला, पार्वती, धूमकेतु, गोवर्धन आदि की विशेषताओं को उभारने का प्रयास किया गया है कालिदास को आश्चर्यजनक रूप से कवित्व-प्राप्ति, हिमालय के अद्भुत दृश्य आदि के कारण इस नाटक का

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अंगीभूत रस अद्भुत है। इसके साथ ही वात्सल्य, रौद्र, हास्य, वीर, करुण, संयोग-शृङ्गार, विप्रलम्भ-शृङ्गार आदि अंगभूत रसों की योजना की गई है। अभिनय में भारती वृत्ति मुख्य है और कैशिकी तथा आरभटी का कहीं-कहीं संयोजन है। नाटक की रचना में यह ध्यान रखा गया है कि इसका सरलता से अभिनय किया जा सके, यथा अभिनय २½ से ३ घण्टे में पूरा हो जावे।

**नाटक का नामकरण—**

प्रस्तुत नाटक का नामकरण "अस्ति कश्चिद् वागर्थः" इस प्रश्न की मूल भावना के अनुरूप है। मेरे द्वारा वरण किया गया यह वर नितान्त जडबुद्धि है, किन्हीं दुष्टों ने षड्यन्त्र और कुमन्त्रणायें करके मुझको ठग कर इसके कपट-पाश में में डाल दिया है, इस प्रकार हृदय को विदीर्ण करने वाली महती मनोव्यथा से से पीड़ित राजकुमारी कालिदास को घर से निकल जाने का आदेश देती है। साथ ही यह भी कहती है कि यदि तुम विद्याध्ययन करके काव्य-रचना की प्रतिभा से युक्त होकर विद्वान् बनकर वापिस आओगे तो मैं यह प्रश्न पूछूँगी— "अस्ति कश्चिद् वागर्थः" इस प्रश्न का समुचित उत्तर देने पर ही तुम मेरे कक्ष में प्रवेश करने का अधिकार पाओगे। कालिदास ने विद्या-अध्ययन करके वैदुष्य और कवित्व को प्राप्त किया। उसने राजकुमारी के पास जाकर उसके प्रश्न का समुचित समाधान करके—अस्ति, कश्चिद् और वागर्थ इन तीन पदों से क्रमशः कुमारसम्भव, मेघदूत और रघुवंश की रचना की। इस प्रकार इस प्रश्न में ही नाटकीय कथानक का बीज है और यह रचना ही फलागम है। अतः इस नामकरण का सर्वथा औचित्य हैं।

**नाटक का कथानक—**

प्रस्तुत नाटक के कथानक का संक्षेप से परिचय देना समुचित होगा। दक्षिण कौशल के महाभारत सुदर्शन की पुत्री विद्योत्तमा ने प्रतिज्ञा की थी कि जो शास्त्रार्थ में मुझको जीतेगा, वही मेरा पति होगा। बहुत से विद्वान् वहाँ आये, परन्तु शास्त्रार्थ में पराजित होकर हृदय में पीड़ित और खिन्न होकर शास्त्रार्थ-भवन से निकाले जाकर वापिस चले गये।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**पहला अङ्क**

धूमकेतु और गोवर्धन नाम के दो नव-स्नातक पण्डितों ने शास्त्रार्थ में पराजित होकर इससे उत्पन्न खेद और क्रोध को मन से भर कर निश्चय किया कि विद्या के मद से विह्वल राजकन्या का विवाह किसी जडबुद्धि मूर्ख से करा दिया जावे। वहीं देवग्राम के समीप वन में कालिदास नाम के एक महान् मूर्ख को माता के साथ लकड़ियाँ काटते देखा। यह विद्वानों में श्रेष्ठ नैयायिक शिवदास का पुत्र था। बाल्यावस्था में ही सिर में चोट लगने के कारण वह जडबुद्धि हो गया था। आश्रय-भूत शाखा को काटने के कारण भूमि पर गिरे उसको देखकर इस लकड़हारे से अधिक दूसरा कौन मूर्ख होगा, यह विचार करके वे पण्डित उसको अनेक प्रलोभन देकर और पाठ पढ़ा कर सुदर्शन की नगरी में ले आये।

**दूसरा अङ्क—**

उस जडबुद्धि मूर्ख कालिदास को श्रेष्ठ आचार्य के वेश में सुशोभित करके उसका परिचय उन्होंने दर्शनाचार्य नाम के आचार्य के रूप में दिया। यह भी कहा कि मौन व्रत होने के कारण वे प्रश्नों के उत्तर इस शास्त्रार्थ में संकेतों से ही देंगे। कालिदास के यौवन और सौन्दर्य से मुग्ध होकर विद्योत्तमा ने उसको अतिशय विद्वान् समझ कर उस बात को उसी प्रकार स्वीकार कर लिया। विद्योत्तमा द्वारा संकेतों के पूछे गये प्रश्नों का उत्तर दर्शनाचार्य रूपधारी कालिदास ने संकेतों से ही दिया। धूम्रकेतु और गोर्वधन ने उन संकेतों की इस प्रकार व्याख्या की कि विद्योत्तमा सन्तुष्ट हो गई। उसने पराजय को स्वीकार करके दर्शनाचार्य को महान् समझ कर उसकी ग्रीवा में वरमाला डालकर पति के रूप में वरण कर लिया।

**तीसरा अङ्क—**

विवाह संस्कार के अनन्तर विद्योत्तमा शयन कक्ष में उत्कण्ठा से भरी हुई पति की प्रतीक्षा कर रही थी। उसके साथ उसकी प्रिय सखी इला भी थी। सखियों और सेविकाओं द्वारा पहुँचाये गये पति के मुख पर मूर्खता के चिह्नों को देखकर उसको आश्चर्य तो हुआ, परन्तु प्रेम से भरी हुई उसने मधुर और प्रणय से भरे वचनों द्वारा उसका स्वागत किया। परन्तु दर्शनाचार्य की अति मूर्खता से भरी गँवारु भाषा को सुनकर पहले तो वह अत्यधिक चकित और भयभीत हुई, परन्तु उसके बाद मन में क्रोध से भर गई। पण्डितों के सारे वृत्तान्त को सुनकर—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"मैं उन धूर्त पण्डितों द्वारा बहुत ठगी गई, वंचित हुई, छली गई, जिन्होंने कि इस जडबुद्धि लकड़हारे को मेरा पति बना दिया", उसकी आँखे क्रोध से लाल हो गई। इला द्वारा बार-बार अनुरोध करने पर भी उसने उस लकड़हारे को घर से निकाल दिया और कहा —"विद्योत्तमा विद्वान् की ही हो सकती हैं। उसने यह भी कहा—"मैं तुम्हारी प्रतीक्षा करूँगी। विद्या-अध्ययन करके गृहद्वार पर तुम्हारे आने पर मैं यह प्रश्न पूछूंगी—अस्ति-कश्चिद्-वागर्थः"। इस प्रश्न का समुचित उत्तर देने पर ही तुम कक्ष के अन्दर प्रवेश करने के अधिकारी बनोगे।

**चौथा अङ्क—**

हृदय में क्रोध भर कर विद्योत्तमा ने उस बेचारे पति को निकाल दिया, परन्तु पातिव्रत धर्म का पालन करने वाली उस भारतीय नारी का हृदय पश्चात्ताप की अग्नि से जलने लगा। वह उसकी खोज करने लगी। इला के साथ रहते हुए वह उसी का विचार करती थी। एक दिन प्रमद वन में कदलीमण्डप में इला और विद्योत्तमा आपस में वार्तालाप कर रही थीं कि कालिदास नाम का कोई महाकवि इस भारतवर्ष में प्रसिद्ध हुआ है। काव्य-रचनाओं के कारण उसका महान् यश चारों दिशाओं में फैल रहा है। श्रव्य काव्यों के साथ उसने कुछ नाटकों की भी रचना की है। विद्योत्तमा ने उन काव्यों और नाटकों को बहुत परिश्रम से धन व्यय करके उज्जयिनी से मंगाया था। नाटकों को देखने से चमत्कृत इला ने प्रस्ताव किया कि इनका अभिनय राजकीय रंगशाला में कराया जाना चाहिये। विद्योत्तमा ने कहा कि पिता जी ने उस कवि को यहाँ निमन्त्रित किया है। नाटकों की रचना करने वाले कवि के निर्देशन में अभिनीत नाटकों का अभिनय अधिक सजीव होगा। उसी समय इरावती नामक एक सेविका ने आकर सूचना दी कि महाकवि कालिदास इस नगर के बाह्य द्वार के तोरण पर उपस्थित हो गये हैं। समारोह और स्वागत के साथ उनको कन्या-अन्तःपुर के सामने के नीचे के राजमार्ग से होकर राजप्रासाद के मुख्य द्वार पर लाया जायेगा। विद्योत्तमा और इला महाकवि के दर्शनों के लिये शयनकक्ष की खिड़की के समीप पहुँच गई।

**पाँचवा अङ्क—**

शयन-कक्ष की खिड़की से मुख को बाहर ऊपर उठाकर इला ने राजमार्ग पर

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रथ पर सवार होकर आते हुये महाकवि कालिदास को राजकुमारी को दिखाया। विद्योत्तमा ने खिड़की से बहुत दूर तक मुख को बाहर निकाल कर उत्सुकता भरी दृष्टि से उसको देखा। कवि का स्वागत करने के लिये सारा ही नगर सुसज्जित और अलंकृत किया गया था। जनपद और नगर के प्रजाजन राजमार्ग पर भरे हुये थे। धीरे-धीरे समीप आते हुये रथ पर आरूढ महाकवि को देखकर इला ने पहचाना कि यह तो वही लकड़हारा है। राजकुमारी भी उसको पहचान कर घबरा कर वेहोश सी होने लगी। इला ने उसको आश्वासन दिया। तभी इरावती नाम की सेविका ने वहाँ आकर सूचना दी कि महाकवि सबसे पहले राजकुमारी का दर्शन करना चाहते हैं।

ये कालिदास वे ही लकड़हारे हैं, किसी प्रकार विद्याध्ययन करके और विद्वान् होकर महाकवि के रूप में प्रसिद्ध हुये हैं, यह विचार करके राजकुमारी ने इला को आदेश दिया कि द्वार को बन्द कर लो। "अस्ति-कश्चिद्-वागर्थः", प्रश्न का समुचित उत्तर प्राप्त करके ही तुम द्वार को खोलना। इला ने वैसा ही किया। कालिदास के उत्तर के सन्तुष्ट होकर इला ने द्वार खोल दिया। अन्दर प्रवेश करने के अनन्तर इला और राजकुमारी से पूछे जाने पर उन्होंने अपना सारा वृत्तान्त वर्णन किया। उन्होंने बताया—

राजकुमारी के शयन-गृह से निकल कर वें उसी वन में पहुँचे, जहाँ से वे दोनों धूर्त पण्डित उसको यहाँ लाये थे। वहाँ आँधी से उखाड़े गये सागोन वृक्ष की मोटी शाखा से सिर पर प्रहार होने से सारी जड़ता और मूर्खता बिलकुल तिरोहित हो गई। उसके पश्चात् महर्षि कुलपति वामदेव के गुरुकुल-आश्रम में पाँच वर्ष तक उन्होंने विद्या-अध्ययन करके काव्यों की रचना करना आरम्भ किया। वहाँ विद्योत्तमा का ही उज्ज्वल और कान्तिमान् मुख उनके हृदय में प्रतिष्ठित रहता था, जो कि सहृदयों के हृदयों को आनन्दित करने में समर्थ मेरे काव्यों की नायिकाओं में निरन्तर अभिव्यक्त होता है। उन्होंने दो नाटकों—मालविकाग्निमित्र और विक्रमोर्वशीय की रचना पूरी कर ली है। अभिज्ञान-शाकुन्तलम् नाम के नाटक के प्रथम अङ्क की रचना भी की है। ६ ऋतुओं को विषय बनाकर गीतिकाव्य रचा है।

राजकुमारी का प्रश्न "अस्ति-कश्चिद्-वागर्थः" निरन्तर मेरे मन को आलोडित करता हुआ मथता रहता था। मैंने 'अस्ति' पद से कुमारसम्भव और 'वागर्थ'

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(विक्षिप्त इव इतस्ततः परिभ्रमति । नेपथ्ये गोवर्धनस्य स्वरः ।)

**गोवर्धनः**—अरे काष्ठभारिक ! किमिवेदं मौर्ख्यम् । यस्यां शाखायां स्थितस्तामेव छिनत्सि । आधारभूतैव ते । अस्याः पतनसमकालमेव तवापि नीचैः संपातो निश्चितः पाणिपादस्य च भञ्जनमपि ! नीचैरागच्छ । दुःखिनी ते जननी । अरे, न त्वयाऽवधीयते ? ते कल्याणकामनैव मां वक्तुं व्यवसाययति । अहो...हन्त, अनेन तु कुठारस्य लक्ष्यं ममैव शिरो विहितम् । न हि, न हि, नैवं विधेयम् । न हि मे शिरस्तथा सुदृढम् । गच्छामि । का मे हानिः ? मूर्खतायाः परिणतिः स्वयमेव आगमिष्यति समक्षम् । कथितं च केनापि सत्यमेव "उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।"

**नारीस्वरः**—हा ! गतोऽयमपि । सम्प्रति कोऽत्र मे सहायः ? को मे पुत्रस्य रक्षकः ? वत्स ! सावहितः शृणु, मन्यस्व मे कथनम् ।

(नेपथ्ये कठकटेति ध्वनिः पुनरपि श्रूयते । गोवर्धनः प्रविशति ।)

---

(विक्षिप्त के समान इधर-उधर घूमता है । नेपथ्य में गोवर्धन का स्वर सुनाई देता है) ।

**गोवर्धन**—अरे लकड़हारे ! यह क्या मूर्खता करते हो । जिस शाखा पर स्थित हो, उसी को काट रहे हो । यह तेरा आधार ही है । इस शाखा के गिरने के साथ ही तुम भी नीचे गिरोगे और हाथ-पैर टूट जायेंगे । नीचे आ जाओ । तुम्हारी माता दुःखी है । अरे तुम तो ध्यान ही नहीं देते हो । मैं तो तुम्हारे कल्याण की इच्छा से कह रहा हूँ । अहो, खेद है, इस कुल्हाड़े का निशाना तो तूने मेरे सिर को ही बना लिया है । नहीं-नहीं । ऐसा न करो । मेरा सिर इतना मजबूत नहीं है । मैं जाता हूँ । मेरी क्या हानि है ? अपनी मूर्खता के परिणाम को स्वयं भोगोगे । किसी ने यह सत्य ही कहा है— मूर्खों को उपदेश देने से अपनी ही हानि है ।

**नारी स्वर**—हाय, यह भी चला गया । अब कौन मेरा सहायक है । कौन मेरे पुत्र की रक्षा करेगा ? पुत्र ! सावधान होकर सुनो ! मेरे कहने को मान लो ।

(नेपथ्य में कट-कट ध्वनि पुनः सुनाई देती है । गोवर्धन प्रवेश करता है) ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**गोवर्धनः**—मित्र ! दृष्टं त्वया, जगदिदं कीदृशैः मूढैः निचितम् ? अनेन काष्ठ-भारिकेण स्वाधारभूतो विटप एव छिद्यते। आधारे छिन्ने पतनमवश्य-म्भावि निराधारत्वात्। पाणिपादस्य च भञ्जनमप्यपरिहार्यम्। अधःस्थिता रोदित्यस्य जननी। मया बोधितेन तु ममैव शिरः कुठारस्य लक्ष्यी कृतम्।

**धूम्रकेतुः**—जगति मूढानां संख्या न गणयितुं शक्यते। एकस्मिन्ननु-सन्धीयमाने मिलन्त्यसंख्यकाः। (किञ्चिद् विचार्य) कदाचिदयमेवास्माकं प्रयोजनं साधयेत्।

(नेपथ्ये भारवतो वस्तुनः पतनध्वनिः, पुरुषस्य नार्यश्च स्वराः श्रूयन्ते)

**पुरुषस्वरः**—होय राम रे, मरेमि हे। होय माये मरेमि हे।

**नारीस्वरः**—त्वमिदं किमकार्षीः ? हे प्रभो ! सम्प्रत्यहं किं करवाणि, कुत्र गच्छामि ?

---

**गोवर्धन**—मित्र ! देखो तुमने ? संसार कैसे मूर्खों से भरा हुआ है। यह लकड़हारा अपनी आधारभूत शाखा ही काट रहा है। आधार के कटने पर निराधार होने से यह अवश्य गिरेगा और इसके हाथ-पैर भी अवश्य टूटेंगे। नीचे खड़ी इसकी माता रो रही है। मेरे समझाने पर तो इसने कुल्हाड़े का निशाना मेरे ही सिर को बना लिया।

**धूम्रकेतु**—संसार में मूर्खों की संख्या गिनी नहीं जा सकती। एक खोजो तो हजार-मिलते हैं। (कुछ विचार कर) शायद यही हमारे कार्य को सिद्ध कर दे ?

(नेपथ्य में भारी वस्तु गिरने का शब्द होता है। पुरुष और नारी के इस प्रकार शब्द सुनाई देते हैं)।

**पुरुष स्वर**—हाय राम, मरि गयन हो। हाय, दैय्या मरि गयन हो।

**नारी स्वर**—पुत्र ! तूने यह क्या कर लिया है। हे प्रभो ! अब मैं क्या करूँ ? कहाँ जाऊँ ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**धूम्रकेतुः**—भ्रातः गोवर्धन ! पश्य, स काष्ठभारिको विटपपतनसमकालमेव स्वयमपि भूमौ पतितः। अवष्टभ्य सजननीकं तमत्रैवानय।

**गोवर्धनः**—वाढम्।

(गच्छति)

**धूम्रकेतुः**—(इतस्ततः परिभ्रमन्) राजकुमारी विद्योतमा...। विक्रमशालिनो महाराजसुदर्शनस्य सुता। एकला प्रियसन्ततिः। नास्ति काचिदन्या तथा विदुषी रमणी रूपयौवनशालिनी भरतखण्डे। सैव राज्यस्योत्तराधिकारिणी। विद्यारूपैश्वर्याणामनुपमः संयोगः। अहो, यद्यहमजेष्यं तां शास्त्रार्थे, तर्हि...। ईदृशो गर्वः ? कथमन्योऽपि कश्चित् तां समुपस्थातुं क्षमते, यदि मयैव नाऽधिगता सा। पश्यामि किं कर्तुं प्रभवामि ?
(गोवर्धनः काष्ठभारिकेण वृद्धया च साकं प्रविशति। काष्ठभारिको दक्षिणहस्तेन गोवर्धनग्रीवामवलम्बते वामेन च स्वकीयं जानु। वामस्कन्धे स वृद्धयाऽवष्टम्भितः। पादयोस्तस्य शोणितबिन्दवः। वदने मालिन्येऽपि

---

**धूम्रकेतु**—भाई गोवर्धन ! देखो, वह लकड़हारा शाखा के गिरने के साथ ही स्वयं भी भूमि पर गिर पड़ा है। सहारा देकर उसको यहाँ ले आओ। माता को भी साथ ले आना।

**गोवर्धन**—अच्छा। (जाता है)।

**धूम्रकेतु**—(इधर-उधर घूमते हुये) राजकुमारी विद्योत्तमा...। प्रतापशाली महाराजा सुदर्शन की पुत्री। एकमात्र प्रिय सन्तान। भारतवर्ष में उसके समान विदुषी और रूपयौवनशालिनी दूसरी रमणी नहीं है। वही राज्य की उत्तराधिकारिणी भी है। विद्या, रूप और ऐश्वर्य का अनुपम संयोग है। अहो, यदि मैं उसको शास्त्रार्थ में जीत लेता तो...अहो ऐसा घमण्ड...। यदि मैंने ही उसको नहीं पाया, तो अन्य भी कोई उसको कैसे पा सकता है ? देखता हूँ, क्या कर सकता हूँ ?

(गोवर्धन एक लकड़हारे और वृद्धा के साथ प्रवेश करता है। लकड़हारा दायें हाथ से गोवर्धन की ग्रीवा का सहारा लेकर बायें हाथ से घुटने को पकड़े हुये है। बाईं ओर वृद्धा उसको कन्धे से सहारा दिये है। पैरों पर खून की बूंदें

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सौन्दर्यकान्तिः । जीर्णवस्त्रेष्वपि विद्योतते सुस्पष्टा अवयवसंघटना। शिरसि मलिनं शिरोवेष्टनं कटिप्रदेशे च सरज्जु जीर्णमधोवसनम् । वक्षः प्रायशो नग्नम्। वृद्धा धवलस्वच्छां शाटिका धारयति। धूलिधूसरितौ पादौ नग्नावेव । वामस्कन्धाल्लम्वते झोलकः (झोलेति भाषायाम्) अङ्गवैकल्येन विस्वरः खञ्जतामभिनयन् काष्ठभारिको रङ्गभूमिं प्रविश्य भूमावेवोपविशति ।

**काठभारिकः**—होय पंडते ! तुअं सच्चे कत्थे असि। परं हं करेमि किं ? मम तु जानु एव्व फुट्टः।

**वृद्धा**—मया बोधितेनापि त्वया आश्रयभूता शाखा छिन्ना । भुङ्क्ष्व स्वकृतमूर्खतायाः फलम्। यादृशी कृतिस्तादृशी परिणतिः। (गोवर्धनं लक्ष्यीकृत्य) पण्डितप्रवर ! मम पुत्रस्य महान् गात्रोपघातः रुधिरमपि प्रवहति। (झोलकात् पात्रमेकमादाय प्रयच्छन्ती) यदि कुतश्चिज्जलमुपलभ्यते, अनुकम्प्याऽहम् ।

---

हैं। मुख सुन्दर और मलिन है। पुराने वस्त्रों के अन्दर से पुष्ट अवयव लक्षित होते हैं। सिर पर मैली पगड़ी है और कमर में रस्सी से बँधा पुराना अधोवस्त्र है। वक्ष प्रायः नग्न है। वृद्धा ने श्वेत-स्वच्छ साड़ी पहनी है। दाँये कन्धे से झोला लटक रहा है। धूलि से भरे पैर नग्न ही हैं। लकड़हारा कराहता और लंगड़ाता हुआ चल रहा है। रंग-मंच पर पहुंच कर लकड़हारा भूमि पर ही बैठ जाता है) ।

**लकड़हारा**—रे पंडत ! तू ठीक कहेओ। पै हम करी का। हमरो तो गोड ही फूट गवा। हा दैय्या···।

**वृद्धा**—पुत्र ! मैंने तो तुमको पहले ही जताया थ कि जिस शाखा पर बैठे हो, उसको मत काटो। अपनी मूर्खता का फल भोगो । जैसा करोगे, वैसा फल मिलेगा। (गोवर्धन को लक्ष्य करके) पंडित श्रेष्ठ ! मेरे पुत्र के शरीर पर बहुत चोट आई है। खून भी बह रहा है। (झोले से बरतन निकाल कर उसे देते हुये) यदि कहीं से जल मिल जावे तो लाने की कृपा करें।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(गोवर्धनः पात्रमादाय जलमानेतुं गच्छति। वृद्धा पुत्रमुपगम्य तस्य जानु परामृशति।

धूम्रकेतुः—(ध्यानमन्दं परिक्रम्य) अयं काष्ठभारिको महामूढ इव प्रतिभाति। सौन्दर्येण विभूषितोऽपि बुद्धिशून्यः। अयमेव किन्न स्यान्मे योजनायाः मूलाधारः ?

(गोवर्धनः पात्रे जलमानीय वृद्धायै प्रयच्छति। वृद्धा स्वीयशाटिकापरिधानत एकां पट्टिकां पृथक् कृत्वा जलार्द्रां कृत्वा पुत्रस्य व्रणं विशोधयति। काष्ठभारिकश्च अभ्यन्तरेषु "होय राम रे मरेमि ह", इत्यादि वचोभिः करुणमाक्रोशते। व्रणं विशोध्य वृद्धा बृद्धातदुपरि पट्टिकां वध्नाति।)

धूम्रकेतुः—(वृद्धामुपगम्य) मातः! सर्वमेतद् अत्यद्भुतमिव प्रतिभाति। सुसंस्कृतायाः बुद्धिमत्याः विचारशीलायाभवत्याः सुतोऽयं संस्कारविहीनः, सुरूपोऽपि मूढः। कोऽत्र हेतुः ?

गोवर्धनः—मातः! ममाऽप्यत्र महत् कुतूहलम्। यदि न भवेत् किमपि रहस्य, आवामनुकम्पनीयौ श्रावणेन।

---

(गौवर्धन बरतन लेकर जल लेने चला जाता है। वृद्धा पुत्र के समीप जाकर उसका घुटना सहलाती है)।

धूम्रकेतु—(ध्यान से देखते हुए घूम कर) यह लकड़हारा तो बहुत मूर्ख प्रतीत होता है। अति सुन्दर होने पर भी बुद्धि से शून्य है। यही क्यों न मेरी योजना का मूल आधार बन जावे।

गोवर्धन पात्र में जल लाकर वृद्धा को देता है। वृद्धा अपनी धोती से एक पट्टी फाड़ कर जल में भिगो कर घाव को धोती है। इस मध्य लकड़हारा—हाय राम मरिगयन हो, हाय दैय्या मरि गयन हो, इस प्रकार करुण क्रन्दन करता है। घाव को धो कर वृद्धा उस पर पट्टी बाँध देती है।)

धूम्रकेतु—(वृद्धा के समीप जाकर) सब कुछ बड़ा विचित्र प्रतीत होता है। आप तो सुसंस्कृत, वृद्धिमती और विचारशील हैं। परन्तु आपका यह पुत्र सुन्दर होते हुये भी संस्कारों से रहित मूर्ख सा है। इसका कारण क्या है ?

गोवर्धन—माता! मुझको भी इस विषय में कौतूहल है। यदि कोई रहस्य की बात हो तो आप सुनाकर हमको अनुगृहीत करे।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**वृद्धा**—(पण्डितौ निरीक्ष्य) पंण्डितप्रवरौ ! नाऽत्र किमपि रहस्यं न चापि कथने कोऽपि सङ्कोचः परं दौर्भाग्यं मे। विधेर्विधानं न कोऽपि लङ्घयितुं क्षमः। बलवती खलु भवितव्यता। सम्प्रति तासां घटनानां विचारणेनापि मनः गम्भीरवेदनाभिः विदीर्यंत इव।

(वाष्पार्द्राभ्यामर्धोनिन्मषिनयनाभ्यां पण्डितौ निरीक्षते।

**गोवर्धनः**—मातः ! यदत्र खिद्यते भवत्या, अलं वर्णितेन।

**वृद्धा**—न हि पंण्डितप्रवरौ। प्रियजनसंविभक्तं दुःखं सह्यवेदनं भवति। उपसर्पतां भवन्तौ। कथयामि।

**धूम्रकेतुः गोवर्धनौ**—(उपसृत्य) तर्हि कथयतु।

**वृद्धा**—अस्य वनस्य दक्षिणस्यां दिशि वेणुगङ्गायाः धारा।

**गोवर्धनः**—अस्ति खलु।

---

**वृद्धा**—(पंडितों को देख कर) पण्डित श्रेष्ठों ! इसमें कोई रहस्य नहीं है। न मुझको इसमें कोई संकोच है। परन्तु मेरा दुर्भाग्य है। विधाता के विधान को कौन लाँघ सकता है। भवितव्यता निश्चय ही बलवान् है। अब उन बातों का विचार करके भी मन गहरी वेदना से फटने सा लगता है।

(आसुओं से भरी आधी बन्द आँखों से पंण्डितों को देखती है)।

**गोवर्धन**—माता ! यदि आपको इसमें कष्ट होता हो तो रहने दीजिये।

**वृद्धा**—नहीं, नहीं पंण्डित श्रेष्ठो ! प्रिय जनों से कहने पर दुःख हलका हो जाता है। आप दोनों समीप बैठिये। कहती हूँ।

**गोवर्धन और धूम्रकेतु**—(समीप बैठ कर) तो कहिये।

**वृद्धा**—इस वन की दक्षिण दिशा में वेणुगंगा की धारा बहती है।

**गोवर्धन**—माता बहती तो हैं।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**वृद्धा**—तस्या उत्तरदिग्वर्तिनि तटे रामगिरिपर्वतं निकषा देवग्रामो नाम ग्रामः।

**धूम्रकेतुः**—ग्रामस्य नाम तु श्रुतपूर्वम्। अस्माकमाचार्यप्रवराः कथयन्ति स्म—"वेणुगङ्गाया उत्तरदिग्वर्तिनि तटे देवग्रामे शिवदासो नाम न्यायशास्त्र-परमनिष्णातो निवसति।"

**गोवर्धनः**—आम्। आचार्यप्रवराः अचकथन् खलु।

**वृद्धा**—सत्यं जानीतः भवन्तौ। सुदूरवर्तिभ्यः स्थानेभ्योऽध्ययनसमुत्सुका विद्यार्थिनः समागत्य-समागत्य तस्मान्न्यायशास्त्रमधीयते स्म। अहं पार्वती तस्यैव महाभागस्य सहधर्मिणीपदसौभाग्यं लब्ध्वा धन्यामात्मानं मेने।

**धूम्रकेतु-गोवर्धनौ**—(ससम्भ्रममुत्थाय प्रणम्य) भवती तस्य परमादरणीयस्य भरतखण्डे प्रथितयशसो न्यायशास्त्रप्रवीणस्य शिवदासस्य धर्मपत्नी खलु?

**पार्वती**—आम्, सत्यम्। परन्तु पण्डितप्रवरौ भवन्तौ समुत्थितौ कथम्?

---

**वृद्धा**—उसके उत्तरी तट पर रामगिरि के समीप देवग्राम नाम का ग्राम है।

**धूमत्रतु**—इस ग्राम का नाम तो पहले सुना है। हमारे आचार्य कहते थे कि वेणुगंगा के उत्तरी तट पर देवग्राम में शिवदास नाम के परम विद्वान् नैयायिक रहते हैं।

**गोवर्धन**—हाँ आचार्य इस प्रकार कहा तो करते हैं।

**वृद्धा**—आप सत्य जानते हैं। सुदर स्थानों से विद्या-अध्ययन के लिये उत्सुक विद्यार्थी आकर उनसे न्याशास्त्र का अध्ययन करते थे। मेरा नाम पार्वती है। उन्ही महाभाग की सहधर्मिणी होने के सौभाग्य को प्राप्त करके मैंने अपने को धन्य माना था।

**गोवर्धन और धूम्रकेतु**—(सम्भ्रम से खड़े होकर और वृद्धा को प्रणाम् करके) आप उन्हीं परम आदरणीय भरतखण्ड में विस्तृत यश वाले, न्यायशास्त्र में पारंगत शिवदास महोदय की धर्मपत्नी है?

**पार्वती**—हाँ, यह सत्य है। परन्तु हे पंण्डित श्रेष्ठो! आप खड़े क्यों हो गये

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उपविशतां तावत् । तानि सर्वाणि सुखानि अतीतस्य गर्भे विलीनानि । गतास्ते दिवसाः । परिग्रहानन्तरँ कालक्रमान्मया एका सन्ततिः प्रसूता । न्यायशास्त्रपारङ्गतोऽपि मे भर्ता ज्योतिर्विद्यायामपि पारङ्गतः । बालकस्य जन्मपत्रिकां निरीक्ष्य तेनोक्तम्—"बालोऽयमत्यन्तँ प्रभविष्णुः"। सकलविद्या-निष्णातोऽयं काञ्चिद् विदुषीं राजकन्यां परिणीय विद्याकवित्वप्रतिभा प्रभावेण जगति चिरस्थायिनीं कीर्तिमधिगमिष्यति । यावच्चन्द्रदिवाकरौ लोका एतस्य यशः गास्यन्ति । परन्तु...

धूम्रकेतुः—परन्तु, इति किम् ?

पार्वती—परन्तु आयुषस्तृतीये वत्सरेऽत्यन्तं बलवान् मारणयोगो वर्तते। प्राणेषु रक्षितेष्वपि महदनिष्टसम्भावना ।

गोवर्धनः—अहो ! विधेः प्राबल्यम् ।

धूम्रकेतुः—ततस्ततः ?

---

हो गए ! बैठे जाइये । ये सब सुख तो अतीत के गर्भ में विलीन हो गए हैं। ववाह के अनन्त समय के क्रम से मैंने एक सन्तान को जन्म दिया था । मेरे पति न्यायशास्त्र के साथ ही ज्योतिष विद्या में पारंगत थे । बालक के जन्म के लग्न को देखकर उन्होंने कहा था कि यह बालक होनहार है । यह सब विद्याओं में निष्णात होगा और किसी विदुषी राजकुमारी से विवाह करेगा । विद्या और प्रतिभा के प्रभाव से यह संसार में अविनश्वर कीर्ति को प्राप्त करेगा । जब तक सूर्य और चन्द्रमा चमकेंगे, लोक इसके यश का गान करेंगे । परन्तु...

धूम्रकेतु—परन्तु, क्या...?

पार्वती—परन्तु आयु के तीसरे वर्ष में एक अत्यधिक बलवान् मारण योग है । इससे इसके प्राण तो बच जायेंगे, परन्तु अनिष्ट की बहुत सम्भावना है ।

गोवर्धन—अहो, विधि की प्रबल रेखायें ।

धूम्रकेतु—तदनन्तर ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**पार्वती**—काल्युपासकेन मे भर्त्रा देव्या प्रसाद इति मत्वा सुतं कालिदासाभिधानेन समलङ्चकार।

**गोवर्धनः**—बालकस्य नाम तु अतिशोभनम्। ततस्ततः ?

**पार्वती**—बालकः स क्रमशः शुक्लपक्षचन्द्र इव प्रतिदिनं वर्धमानः, अनुपमं रूपलावण्यं दधानः, मधुरं कलस्वरं पोषयन् ग्रामवासिनां स्नेहातिरेकभाजनं बभूव। प्रतिभामपि विलक्षणामलभत। सर्वे जनास्तं स्वेषु अङ्केषु लालयितुं समुत्सुकाः समवर्तन्त। इत्थमङ्कादङ्कं सञ्चरतस्तस्य वर्षत्रयं व्यतीतम्।

**धूम्रकेतुः**—ततस्ततः ?

**पार्वती**—तदैव वज्रमनभ्रमापतितम्। बालकस्य आयुषस्तृतीये वत्सरे जनकोऽस्य सन्निपातरोगग्रस्तो बभूव। सुकुशला अपि चिकित्कास्तं चिकि-

---

**पार्वती**—मेरे पति भगवती काली के उपासक थे। वे उस बालक को काली देवी का वरदान मानते थे। अतः उन्होंने इस बालक का नाभ कालिदास रखा।

**गोवर्धन**—नाम तो बालक का बहुत सुन्दर रखा गया। उसके बाद ?

**पार्वती**—यह बालक क्रमशः शुक्ल पक्ष के चन्द्रमा के समान बढ़ने लगा। अनुपम सौन्दर्य और मधुरकल स्वर के कारण यह सभी ग्रामवासियों के स्नेह का पात्रथा। बुद्धि भी विलक्षण थी। सभी उसको गोदी में उठा कर प्यार करने के लिये लालायित रहते थे। इस प्रकार एक गोदी से दूसरी गोदी में घूमते हुये उसके तीन वर्ष बीत गये।

**धूम्रकेतु**—उसके बाद ?

**पार्वती**—पण्डितश्रेष्ठो! तभी उसके बाद हम पर बिना बादलों के बज्रपात हुआ। जब यह बालक तीन ही वर्ष का था, इसके पिता सन्निपात रोग से ग्रस्त हो गये। कुशल वैद्य भी उनकी चिकित्सा नहीं कर सके। ना ही उनके प्राणों को बचा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्सितुं नशेकुः। न चापि तस्य प्राणान् परिरक्षितुम्। शोकसागरे निमज्य सर्वानस्मान् स शिवलोकस्यातिथ्यमङ्गीचक्रे।

धूम्रकेतुगोवर्धनौ—हा हा, स उद्भटो विद्वान् महान् नैयायकिः पञ्चत्वं गतः।

गोवर्धनः—अन्तेवासिनोऽस्मान् न्यायशास्त्रं पाठयन्तो गुरवोऽचकथन्—"स्नातकैर्युष्मार्भिस्तेषां न्यायशास्त्रविदां शिवदासमहाभागानां दर्शनमवश्यमेव करणीयम्। तदैव यूयं न्यायदर्शनस्य परमं सत्यमवगमिष्यथ। तस्य दर्शनमेव विद्यार्थिनां हृदयेषु ज्ञानं सञ्चारयति।" तदारभ्यैव वयं तद्दर्शनाभिलाषिण आस्म। परं हा, अस्माकमाशास्त्वधुना धूलिषु विलयं गताः।

पार्वती—पितुरवसानसमये स बालकस्तत्रैव स्थित आसीत्। पितरं मूकीभूतमवलोक्य विक्षुब्ध इव तस्य वपुषि निपपात। गृहस्य वृद्धाभिः कथमपि स प्रसह्य बलात् पृथङ्नीतः।

गोवर्धनः—हा हा अनर्थः।

---

सके। हम सबको शोक के सागर में डुबो कर उन्होंने शिवलोक का आतिथ्य स्वीकार कर लिया।

गोवर्धन और धूम्रकेतु—हाय-हाय, वे उद्भट विद्वान् महान् नैयायिक मृत्यु को प्राप्त हो गये।

गोवर्धन—न्यायदर्शन पढ़ाते हुये हम शिष्यों को गुरुजन कहते थे कि स्नातक होकर तुम उस महान् नैयायिक शिवदास के दर्शन अवश्य करना। तभी तुम जान सकोगे कि न्यायदर्शन का परम सत्य क्या है? उनका दर्शन ही विद्यार्थियों के हृदयों में ज्ञान का संचार कर देता है। हम तभी से उनके दर्शनों की आकांक्षा कर रहे थे। परन्तु, हाय, अब तो हमारी आशायें ही धूलि में मिल गईं।

पार्वती—पिता की मृत्यु के समय यह बालक वहीं खड़ा था। पिता को बोलते न देख कर यह मचल कर उनके ऊपर जा गिरा। घर की वृद्धा स्त्रियाँ उसको किसी प्रकार वहाँ से बलपूर्वक अलग ले गईं।

गोवर्धन—हाय, हाय······अनर्थ हो गया।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**पार्वती**—तस्मिन् विपत्तिकालेऽहमात्मात्तमेव नाऽज्ञासिषं, कुत्राऽस्मीति । बालकः केन धार्यते । काष्ठमल्ले बद्धं जनकं नीयमानवलोक्य—"हा तात, हा तात" इति उच्चैः क्रन्दन् गृहाद् बहिः सत्वरमधावत् । परं देहल्यां अस्खलन् सोपानेभ्योऽधः पतित्वा शिरसि क्षतमुपलभ्य स तत्क्षणादेव मूर्छितो बभूव ।

**धूम्रकेतुः**—सत्यमेवोक्तम्—विपद् विपदमनुसरति । क्षत एव प्रहाराः निपतन्त्यभीक्ष्णाः ।

**गोवर्धनः**—सत्यमिदम् । दग्धव्रण एव क्षाराः निपतन्ति ।

**पार्वती**—चैतन्यमधिगतः स बुद्ध्या जडीभूत इवातिष्ठत् । भर्तारमनुजगमिषन्ती अप्यहं सुतपालनकर्तव्यविवशीकृता जीवनसंवलम्बे । परं बालकस्य यथा-यथा आयुः ववृधे, तथा-तथा सौन्दर्येण सह धियो जाड्यमपि उपचिक्ये । अध्यापनार्थं क्रियमाणाः शतशः प्रयासाः विफलतामेवोपगताः । स कथञ्चिदक्षराणामपि ज्ञानं नालभत ।

---

**पार्वती**—उस विपत्ति के समय मुझको अपना ही होश नहीं था कि मैं कहाँ हूँ । बालक को क्या देखती । अर्थी के साथ पिता को बाँध कर ले जाया जाता देख कर वह पिता-पिता पुकारता हुआ जोरों से रोता बाहर की ओर दौड़ा । परन्तु दरवाजे की चौखट पर फिसल कर सीढ़ियों से नीचे गिरकर वह सिर पर चोट खाकर वह उसी क्षण मूर्च्छित हो गया ।

**धूम्रकेतु**—सत्य ही कहा गया है कि विपत्ति पर विपत्ति आती है । घाव के ऊपर ही भयानक प्रहार होते हैं ।

**गोवर्धन**—यह सत्य है । जले पर ही क्षार गिरते हैं ।

**पार्वती**—होश में आने पर यह बालक जडबुद्धि हो गया । पति का अनुगमन करने की इच्छा रखती हुई भी मैं पुत्र के पालन करने के कर्तव्य से विवश होकर जीवित रही । परन्तु जैसे-जैसे उसकी आयु बढ़ती गई, उसका सौन्दर्य तो बढ़ता गया, बुद्धि की जडता भी बढ़ती गई । विद्या पढ़ाने के सैकड़ों प्रयत्न विफल हो गये । वह किसी प्रकार भी अक्षरों को सीख न सका ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**गोवर्धनः**—हा ! तस्य विद्वद्वरेण्यस्य सुतस्तथा जडीभूतः ? मातः । ततस्ततः ?

**पार्वती**—सञ्जाते तस्मिन् नैयायिके शिवलोकवासिनि सकलमपि शिष्यवृन्दमन्यान् आचार्याननुपजगाम । परिवारस्य आयसाधनानि विशीर्णानि । शनैः शनैः वृद्धजनेषु स्वर्गवासिषु सत्सु माता-पुत्रावावां द्वावेवावशिष्टौ । धनहीनयाऽपि मया कथमपि स जडबुद्धिर्बालकः पालितः ।

**धूमकेतुः**—विशाले वृक्षे भूमौ पतिते तद्विटपाश्रिताः पतत्रिणोऽपि विटपिनमन्यं समाश्रयन्ते । मातः ! किं भवत्या राजकीया वृत्तिः नोपलब्धा ?

**पार्वती**—भूपतिना न कोऽपि प्रस्तावः प्रस्तुतः । पुनस्तथाभूतस्य सर्वजनसमादरणीयस्य विद्वद्वरेण्यस्यभार्या अहं कथमिव राजकीयवृत्यर्थं स्वयमेव नृपं ययाचे ; याचनान्तं हि गौरवम् । कोऽर्थी लाघवं न भजते ?

**गोवर्धनः**—मातः ! पुनस्तस्य किं संवृत्तम् ?

---

**गोवर्धन**—हाँ, उस महान् विद्वान् का पुत्र ऐसा जड़ हो गया । माता उसके बाद ?

**पार्वती**—उस महान् नैयायिक के शिवलोक का वासी हो जाने के पश्चात् उनके सभी शिष्य अन्य आचार्यों के पास चले गये । परिवार के आय के साधन बन्द हो गये । धीरे-धीरे परिवार के वृद्ध जनों के स्वर्गवासी हो जाने पर हम दोनों माता और पुत्र ही बच गये । उस निर्धन अवस्था में मैंने इस जडबुद्धि बालक का किसी प्रकार पालन किया ।

**धूम्रकेतु**—विशाल वृक्ष के भूमि पर गिर जाने पर उस पर रहने वाले पक्षी दूसरे वृक्ष का आश्रय ले लेते हैं । माता ! क्या आपको राजकीय वृत्ति प्राप्त नहीं हुई ?

**पार्वती**—राजा की ओर से कोई प्रस्ताव तो आया नहीं । पुनः सब जनों के आदर के योग्य उन सर्वश्रेष्ठ विद्वान् की पत्नी होकर मैं क्या राजकीय वृत्ति के लिये राजा से भीख माँगती ? याचना करने से गौरव समाप्त हो जाता है । याचक लघु होता है ।

**गोवर्धन**—माता ! फिर उस बालक का क्या हुआ ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**पार्वती**—तारुण्येऽपि स पैत्रिकसंस्कारविहीन एवातिष्ठत् । विद्यया बुद्धया च विवर्जितः स भाग्यरहितः शारीरिकश्रमयोग्य एवावर्तत । मया तस्मै कुठारमेकं दत्वा कथितम्—"पुत्र गच्छ । वनात् काष्ठभारमानीय स्वं मां च पालय । कदाचिदयं मूर्खः स्वाङ्गभङ्गादिकं कुर्यादित्यतोऽहं प्रत्यहं प्रातस्तेन सांकं वनं गत्वा सायं निवर्ते ।

**धूम्रकेतुः**—अहो ! जगति वन्दनीयस्य विदुषो भार्या भवती अनुभवतीहशानि दुर्दिनानि ?

**पार्वती**—विधात्रा भालपट्टे लिखितं मार्जितुं कः क्षमते ? अतिसावधानायां सत्यामपि मयि वने काष्ठानि छिन्दन्नेव साम्प्रतमसौ दुर्घटनाग्रस्तः सञ्जातः ।

**गोवर्धनः**—(ससम्भ्रमं काष्ठभारिकं लक्ष्यीकृत्य) तन्मातः ! अयं काष्ठभारिक एव न्यायशास्त्रधुरीणानां शिवदासमहोदयानां कालिदासाभिधेयः सुतः किम् ?

---

**पार्वती**—युवा होने पर भी वह बालक पैतृक संस्कारों से रहित ही रहा । विद्या और वुद्धि से रहित वह शारीरिक श्रम के ही योग्य था । मैंने उसको एक कुल्हाड़ी देकर कहा—पुत्र ! जाओ । वन से लकड़ी काट कर लाओ । अपना और मेरा पालन करो । कहीं अपनी मूर्खता से वह अपने अंगों को ही न चोट पहुँचा ले, इस कारण मैं भी उसके साथ प्रतिदिन प्रातः वन को आकर सायंकाल लौटती रही ।

**धूम्रकेतु**—ओह, उस जैसे परम विद्वान् की पत्नी होकर भी आपको ऐसे दुर्दिन देखने पड़े ।

**पार्वती**—विधाता ने जो भालपट्ट पर लिख दिया है, उसको कौन मिटा सकता है । मेरे बहुत सावधन रहने पर भी आज वन में लकड़ी काटते हुये यह दुर्घटना हो ही गई ।

**गोवर्धन**—(सम्भ्रम से लकड़हारे की ओर संकेत करके) तो माता ! क्या हम यह समझे कि यह लकड़हारा ही परम विद्वान् नैयायिक शिवदास महोदय का पुत्र है, इसका नाम कालिदास है ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**पार्वती**—आम्, पण्डितप्रवर इदमेव मे दौर्भाग्यम्।

**काष्ठभारिकः**—(हस्तौ नर्तयित्वा) होय पंडते ! मम नांव तु करिया अत्थि, करिया रे।

**धूम्रकेतुः**—भवदीयो भर्ता ज्योतिर्विच्छिवदासमहोदयो भविष्यमकथयत्—'अस्य बालकस्य विवाहयोगः कयाचिद् राजकन्यया वर्तते ।" साम्प्रतमयं कृतविवाहो न वा ?

**पार्वती**—न कथमपि।

**धूम्रकेतु**—एतादृशः सुरूपो युवा निपुणमनुसन्धीयमानोऽपि न लभ्यते ?

**पार्वती**—पण्डितप्रवर ! न केवल रूपलावण्यं यौवनं चैव प्रशस्यम् । ग्रामस्य कुरूपा अपि निर्धना अपि काचिद् युवती स्वीयं कृपाटकटाक्षमेतस्य बुद्धिशून्यस्य जडमतेरुपरि न निक्षिपति ।

**धूम्रकेतुः**—(काष्ठभारिकस्य दक्षिणकरतलं हस्ते गृहीत्वा रेखागणनां

---

**पार्वती**—हाँ, पण्डित श्रेष्ठ ! यह मेरा दुर्भाग्य ही है।

**लकड़हारा**—(हाथ नचा कर) नाहीं हो पडत, हमार नाव तौ करिया है, करिया।

**धूम्रकेतु**—माता ! आपके पति ज्योतिषी शिवदास महोदय ने कहा था कि इस बालक के विवाह का योग किसी राजकन्या के साथ है। अब यह विवाहित है या नहीं।

**पार्वती**—किसी भी प्रकार विवाह नहीं हुआ।

**धूम्रकेतु**—ऐसा सुन्दर युवक तो खोजने पर भी नहीं मिलेगा।

**पार्वती**—पण्डित श्रेष्ठ ! सुन्दर और युवा होने से ही क्या होता है ? ग्राम की कोई निर्धन कुरूप भी कन्या बुद्धि से शून्य इसकी ओर दृष्टिपात नहीं करती।

**धूम्रकेतु**—(लकड़हारे की दायीं हथेली को हाथ में लेकर और रेखाओं की गणना

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चाभिनीय) मातः ! सत्यमेव भवत्याः सुतस्य विवाहयोगः राजकन्यया वर्तते । सुनिश्चितमयं काञ्चिद् विदुषीं रूपलावण्यसम्पन्नां राजकन्यां परिणेष्यते । ततश्चायं चिरस्थायि यशोऽप्यधिगमिष्यति ।

**पार्वती**--पण्डितप्रवर ! इदं किं कथयति भवान् ? न वयं निर्धनाः परिहास्याः ।

**धूम्रकेतु**--मातः ! सत्यमेव वदामि । भवत्याः सहयोगे सति मूर्खस्याप्यस्य काष्ठभारिकस्य परिणयो महाराजस्य सुदर्शनस्य परमरूपलावण्य-परिपूर्णया सरस्वतीप्रसादभूतया विदुष्या कन्यया विद्योत्तमया सम्भवति ।

**पार्वती**--(चमत्कृत्य) राजकुमार्या विद्योतमया सह ? पण्डितप्रवर ! किमुच्यते भवता ? क्व तु सा परमविदुषी रूपलावण्यवती समृद्धिशालिनी राजकुमारी, क्व चायं निर्धनो जडो वनेषु काष्ठानां छेत्ता काष्ठभारिकः ? भवान् न मां परिहसतु नैव परिहसतु । अपरँ च राजकुमार्याः प्रतिज्ञैषा प्रथिता खलु, सा तमेव···।

---

का अभिनय करके) माता ! वास्तव में आपके पुत्र के विवाह का योग राजकन्या के साथ है । निश्चय से इसका विवाह किसी विदुषी और रूपवती राजकन्या से होगा । इसके बाद इसको अविनश्वर यश प्राप्त होगा

**पार्वती**—पण्डित श्रेष्ठ ! यह आप क्या कहते हैं, क्यों हम गरीबों का परिहास करते हैं ?

**धूम्रकेतु**—माता ! मैं सत्य ही कहता हूँ। आपके सहयोग करने पर इस मूर्ख का विवाह महाराज सुदर्शन की परम रूपवती सरस्वती की कृपारूप विदुषी कन्या विद्योत्तमा के साथ हो सकता है ।

**पार्वती**—(चौंक कर)) राजकुमारी विद्योत्तमा के साथ ? पण्डितश्रेष्ठ ! यह आप क्या कह रहे हैं । कहाँ तो वह परम रूपवती विदुषी, समृद्धिशालिनी राजकुमारी और कहाँ यह निर्धन, जडबुद्धि, वनों में लकड़ी काटने वाला लकड़हारा। आप हमारी यहहँ सी न कीजिये । न कीजिये। इसके अतिरिक्त राजकुमारी की तो यह प्रतिज्ञा प्रसिद्ध है कि वह उसी के साथ ...।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धूम्रकेतुः—सा तमेव परिणेष्यति, यः शास्त्रार्थे तां पराजेष्यते । मातः ! विदिताऽस्माकं सा तस्याः प्रतिज्ञा । तेषां नैयायिकमहाभागानां जडमतिरपि सुतोऽयं शास्त्रार्थे तां पराजेतुं समर्थः । भवत्याः पत्युः वचनं घटयिष्यति खलु विधिः नियतम् ।

पार्वती—पण्डितप्रवर ! एवं न विधेयम् । कदाचित्सा विदुषी राजकुमारी आजीवनमनेन जडबुद्धिना सह विह्वला विधुरा दग्धहृदया च न पारयेत् प्राणानपि रक्षितुम् ?

धूम्रकेतुः—यो जनः शास्त्रार्थे राजकुमारी पराजेतुं क्षमः, तत्र क्वचिज्जाड्यस्यापि सम्भावना ? मातः ! नात्र त्वया किमपि चिन्तनायं शङ्कनीयं वा । भवत्या स्वसुतोऽस्मभ्यं निक्षेपणीयः । विवहत्वयं राजकुमारीम् ।

पार्वती—(सामोदम्) तत्सत्यमेवायं जडमूढः कालिदासः शास्त्रार्थविजयी भूत्वा राजकुमारीं विद्योत्तमां परिणेष्यते ?

धूम्रकेतुः—आम्, नियतमेव । सत्यमेवैतत् । साम्प्रतं भवत्या गन्तव्यः

---

धूम्रकेतु—वह उसी के साथ विवाह करेगी, जो उसको शास्त्रार्थ में पराजित कर देगा। माता ! हमको उसकी प्रतिज्ञा विदित है। उस महान् नैयायिक का यह जडमति पुत्र उस राजकुमारी को शास्त्रार्थ में पराजित करने में समर्थ है। आपके पति के भविष्य-कथन को विधाता निश्चय ही पूरा करेगा।

वृद्धा—पण्डितश्रेष्ठ ! ऐसा न कहिये । कहीं वह विदुषी राजकुमारी इस जडमति के साथ जीवनपर्यन्त जलती हुई विह्वल होकर प्राणों की भी रक्षा न कर सके।

धूम्रकेतु—जो पुरुष राजकुमारी को शास्त्रार्थ में हरा देने की क्षमता रखता है, वह कहीं मूर्ख हो सकता है। माता ! आप इसकी कोई चिन्ता या शंका न करें। आप अपने पुत्र को हमें दे दीजिये। यह राजकुमारी विद्योत्तमा से विवाह करे।

पार्वती—(प्रसन्नता से) तो सत्य ही यह मूर्ख कालिदास राजकुमारी विद्योत्तमा को शास्त्रार्थ में जीत कर उसका पाणिग्रहण करेगा ?

धूम्रकेतु—हाँ यह अटल सत्य है। अब आप अपने ग्राम को चली जाइयेगा। हम

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वकीयो ग्रामः। अस्माभिरयं किञ्चिच्छिक्षणीयः, येन राजकुमारीं शास्त्रार्थे पराजेतुं क्षमो भवेत्।

**पार्वती**—तर्हि मया गन्तव्यमेव ?

**धूम्रकेतुः**—आम्, निवर्तनीयं भवत्या। शास्त्रार्थविजयिनोऽस्यपरिणये संवृत्ते समागन्तव्यं भवत्या।

**पार्वती**—तदयं भवतोः निक्षेप एव।

(पार्वती पुनः-पुनः मुखमावर्त्यावलोकयन्ती रङ्गभूमेः निर्गच्छति काष्ठभारिकश्च मातरं निर्निमेषं निरीक्षते।)

**गोवर्धनः**—भानोरस्तगिरिशिखरारोहणसूचिका विभातीयमनुरागवती सन्ध्या पश्चिमक्षितिव्यापिनी। केसरिव्याघ्रतरक्षुचित्रकर्क्षशूकरवृकादिभिः नरमांसलोलुपैः हिंस्रजन्तुभिः समाकीर्णं घनमिदमरण्यम्।

---

इसको कुछ सिखायेंगे। इससे यह शास्त्रार्थ में राजकुमारी को पराजित कर सकेगा।

**पार्वती**—तो मैं चली जाऊँ ?

**धूम्रकेतु**—हां आप लौट जाइये। जब यह शास्त्रार्थ में जीत कर विवाह कर ले तो आप आ जाना।

**पार्वती**—तो यह आपके पास धरोहर ही है।

(पार्वती बार-बार मुख मोड़कर पुत्र को देखती हुई रंगमंच से चली जाती है। लकड़हारा जाती हुई माता को निर्निमेष देखता खड़ा रहता है।)

**गोवर्धन**—मित्र ! सूर्य के अस्ताचल शिखर पर आरूढ़ होने की सूचना देने वाली लाल सन्ध्या पश्चिम क्षितिज में चमक रही है। सिंह, व्याघ्र, तेंदुआ, चीता, रीछ, सुअर, भेड़िया आदि मांस के लोभी हिंस्र जन्तुओं से यह वन भरा हुआ है।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धूम्रकेतुः—सत्यमभिधीयते भवता। भयानकमिदमरण्यं मांसलोलुपैः श्वापदैः समाकीर्णम् कण्टकैश्छादितमपि च दुरधिगम्यम्। अधुनैव प्रतिष्ठावहे।

गोवर्धनः—तत् प्रचलतु त्वरितम्।

धूम्रकेतुः—(काष्ठभारिकं निरीक्ष्य) भो भ्रातः करिये ! कस्तेऽभिलाषः ? राजकुमारीं विवहसि ?

काष्ठभारिकः—(वक्षसि हस्तं निधाय) ओ मम विवाहं राजकुआंरी सारधे ?

(मुखं व्यादाय धूम्रकेतुं पश्यति)

धूम्रकेतुः—आम्। पश्य मम कथनानुसारी त्वं राजकुमारीं परिणेष्यसे। (गोवर्धनमभिमुखीभूयं) भ्रातः कीदृशी मे योजना ?

गोवर्धनः—मित्र योजना ते शोभना अशोभना वा, इत्यहं न जाने। परं कथमिव वेपते मे हृदयम्। निर्दोषा सरला च सा वराकी विदुषी राजकुमारी। हा,

---

धूम्रकेतु—तुम ठीक कहते हो। यह भयानक वन हिंस्र जन्तुओं और कांटों से भरा है। अभी चलते हैं।

गोवर्धन—तो शीघ्र चलो।

धूम्रकेतु—(लकड़हारे से) क्यों भाई करिया ? तुम्हारी क्या इच्छा है, राजकुमारी से विवाह करोगे ?

लकड़हारा—(छाती पर दोनों हाथ रख कर) हमार ब्याह राजकुमारी के संगे ?

(मुख फाड़ कर धूम्रकेतु को देखता है।)

धूम्रकेतु—हाँ। देखो हमारे कहे के अनुसार आचरण करने पर तुम राजकुमारी के साथ विवाह करोगे। (गोवर्धन की ओर देख कर) भाई ! मेरी योजना कैसी है ?

गोवर्धन—मित्र ! तुम्हारी योजना ठीक है या नहीं, यह तो मैं नहीं जानता। परन्तु मेरा हृदय कांप सा रहा है। वह निर्दोष सरल बेचारी विदुषी राजकुमारी।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यद्ययमुपजापोऽस्माकं भिद्येत ? याद्यावां निगडितौ भवेव ? अलमलम्······ (हस्तेन ग्रीवा परामृशति)।

धूम्रकेतुः—मित्र ! तव हृदयं पुनरपि कातरत्वमनुविशति । हृदयदौर्बल्यं विमुञ्च। दृढतां धारय। को लाभो राजकुमारीं प्रति मोहभावेन ? रूपस्य विद्याया ऐश्वर्यस्य मदेनोन्मत्ता सा अवश्यमेव शिक्षणीया। सर्पिण्याः विषदन्तास्तु त्रोटनीया एव। व्याधपाशबद्धा राजहंसीव मत्स्योपजीवि जालपतिता मत्स्यिकेव छटपटायमाना सा सगर्वा राजकन्या कमप्यनिर्वचनीयं यातनातिशयमनुभवतीति परिकल्प्यैव तिरस्कृतिवह्निना दह्यमाने हृदये कामपि शान्तिमनुभवामि । (काष्ठभारिकं प्रति) किं भो ! राजकुमारीं विवहसि ?

काष्ठभारिकः—कथं न ? होय पंडते जया तुमं कत्थे असि, तथा ह करेमि। ममं करेसि विवाह।

धूम्रकेतुः—बन्धो ! त्वां वयं नगरे नीत्वा स्नानानुलेपनादिकं कारयित्वा उत्तम-

---

हाय, यदि यह हमारा षड्यन्त्र खुल जावे और हम पकड़े जावें ? बस बस··· (ग्रीवा पर हाथ फैरता है)।

धूम्रकेतु—मित्र ! तुम्हारा हृदय पुनः कायर हो रहा है। हृदय की दुर्बलता को निकाल दो। दृढ़ बनो। राजकुमारी के प्रति मोह करने से क्या लाभ है ? रूप, विद्या और ऐश्वर्य के घमण्ड से उन्मत्त उसको अवश्य सीख मिलनी चाहिये। नागिन के जहर के दाँत अवश्य तोड़ देने चाहियें। बहेलिये के जाल में फंसे राजहंस के समान तथा मछुआरे के जाल में गिरी मछली के समान तड़पती हुई यह गर्वीली राजकन्या किसी अनिर्वचनीय अतिशय यातना का अनुभव करे, उस अवस्था की कल्पना करके अपमान से सुलगते हृदय में मैं शान्ति का अनुभव कर रहा हूँ। (लकड़हारे से) क्यों भाई राजकुमारी से विवाह करोगे ?

लकड़हारा—काहे ना करब। अरे पंडत जैसन तू कहिहो, हम बैसन करब। बस हमार ब्याह करवाओ।

धूम्रकेतु—भाई ! हम तुमको नगर में ले जाकर, स्नान-अनुलेपन आदि करवा कर

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वस्त्राणि परिधापयिष्यामः । ततश्च राज्ञोऽन्तिकं राजसभायां नेष्यामः । तत्र त्वां दर्शयित्वा कथयिष्यामो, यदेतेऽस्माकं विश्वविद्यालयस्याचार्याः दर्शनाचार्यमहोदयाः । तारुण्य एव भगवत्या सरस्वत्या महत्या प्रतिभया अनुकम्पिताः । गुणानुरूपां वधूटीम् अनुसन्दधानाः भवन्त एतावत्कालं द्वितीयम् आश्रमम् न अवृण्वन् । इदानीं राजकुमार्याः विद्याप्रकर्षं निशम्य परिणयेच्छया शास्त्रार्थम् अभिलषमाणा इह समायाताः ।

**काष्ठभारिकः**—आं······आं······ ।

**धूम्रकेतुः**—ततश्च राजकुमारी तत्र आगमिष्यति । सा सङ्केतैः त्वां कांश्चित् प्रश्नान् प्रक्ष्यति । परन्तु त्वया मुखान् न एकोऽपि शब्द उच्चार्यः । वयं राज्ञे निवेदयिष्यामः—"अस्माकम् आचार्यप्रवरैः मौनव्रतमाचरितम् । सङ्केतैः एव प्रश्नोत्तराणि भविष्यन्ति" । राजकुमार्याः सङ्केतान् वीक्ष्य त्वया अपि सङ्केताः प्रयोजनीयाः । ततश्त तय साकं ते विवाहो भविष्यति । अधुना ते नाम दर्शनाचार्यः ।

---

उत्तम वस्त्र पहनायेंगे । इसके बाद तुमको राजसभा में राजा के पास ले जावेंगे और तुमको ले जाकर कहेंगे कि ये हमारे विश्वविद्यालय के आचार्य दर्शनाचार्य हैं । तरुण अवस्था में ही भगवती सरस्वती ने महती प्रतिभा द्वारा इन पर कृपा की है । गुणों के अनुरूप वधू की खोज करते हुये इन्होंने अभी तक दूसरे आश्रम का वरण नहीं किया है । अब राजकुमारी की विद्वत्ता के यश को सुन कर विवाह की इच्छा से शास्त्रार्थ करने के लिये यहाँ आये हैं ।

**लकड़हारा**—हाँ······आँ······ ।

**धूम्रकेतु**—और उसके बाद राजकुमारी वहाँ आयेगी । वे संकेत करके तुमसे कुछ प्रश्न पूछेंगी । परन्तु तुम मुख से एक भी शब्द न निकालना । हम राजा से कहेंगे कि हमारे आचार्य ने मौन व्रत धारण कर रखा है । संकेतों से ही प्रश्न-उत्तर होंगे । राजकुमारी के संकेतों को देख कर तुम भी चाहे जैसा संकेत कर देना । तब उसके साथ तुम्हारा विवाह हो जावेगा । अब तुम्हारा नाम दर्शनाचार्य है ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(काष्ठभारिकः स्वीकृतिसूचकं शिरश्चालयति ।)

**धूम्रकेतुः**—भ्रातः गोवर्धन ! चलतु भवान् । साम्प्रतं नगरमेव गच्छामः । बहु विलम्बितम् । इयमायाति सूर्योस्तस्तमनवेला ।

**गोवर्धनः**—वाढं मित्र ! चलनीयमेवेदानीम् । सघनमेतदरण्यम् । नरमांसलोलुपाः श्वापदाः विचरन्त्यत्र ।

**काष्ठभारिकः**—(हस्तावुत्थाप्य) अहो हो, ममं विवाह राजकुआंरी सारधे, ममं विवाह राजकुआंरी सारधे भवेदि । अहा हो, अहा हो । ममं नांव तु दस्सनाचारह ।

(उत्थातुं चेष्टते, परन्तु दारुणं क्वणन् जानु गृहीत्वा तत्रैवोपविशति ।)

**धूम्रकेतुः**—उत्तिष्ठ ! बन्धो उत्तिष्ठ । चल साम्प्रतम् ।

(धूम्रकेतुगोवर्धनौ सहस्तावलम्बंतकाष्ठभारिकमुत्थापयतः । ममं

---

(लकड़हारा स्वीकृति से सिर हिलाता है) ।

**धूम्रकेतु**—(गोवर्धन से) चलो भाई, अब नगर की ओर चलें । बहुत देर हो चुकी है । सूर्यास्त हो रहा है ।

**गोवर्धन**—हाँ मित्र ! अब चलना ही चाहिये । यह घना वन है । यहाँ मनुष्य के मांस के लालची हिंसक पशु दिखाई देने लगे हैं ।

**लकड़हारा**—(दोनों हाथ उठा कर) वाह वा, हमार ब्याह राजकुमारी के संगे, राजकुमारी के संगे होई । वाह वा, वाह वा । हमार नांव तो दस्सनाचार होई ।

(उठने की चेष्टा करता है । परन्तु कराह कर बैठ जाता है) ।

**धूम्रकेतु**—उठो भाई उठो, अब चलो ।

(गोवर्धन और धूम्रकेतु हाथों का सहारा देकर लकड़हारे को उठाते हैं । हमार

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विवाह राजकुआंरी सारधे, ममं विवाह राजकुआंरी सारधे, ममं नांव तु दस्सनाचारह, इत्येवं वदन् हस्तौ नर्तयन् काष्ठभारिकः पण्डिताववलम्ब्य रङ्गभूमितः निर्गच्छति ।)

(निर्गच्छन्ति सर्वे)

(यवनिका पतति)

॥ इति प्रथमोऽङ्कः ॥

---

ब्याह राजकुंवारी के संगे, हमार ब्याह राजकुंवारी के संगे, हमार नांव तो दस्सनाचार होई, इस प्रकार कहता और हाथ नचाता हुआ लकड़हारा पण्डितों का सहारा लेकर रंग-मंच से निकल जाता है ।)

(सब चले जाते हैं)

(यवनिका गिरती है)

॥ प्रथम अङ्क समाप्त हुआ ॥

---

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# द्वितीयोऽङ्कः

(यवनिकायाः पृष्ठभागे वीणामुरजादीनां वाद्यानां ध्वनिः। राजसभायाः दृश्यम्। सभाभवनस्य पूर्वखण्डे समुन्नतवेदिकामध्यवर्तिनि रत्नजटितसुवर्णनिर्मितसिंहासने विराजते महाराजः सुदर्शनः। अधस्ताच्चोभयतः महार्घे पीठासने। दक्षिणे सुशोभते राजकुमारी विद्योत्तमा। वामे च प्रधानामात्यो देवपालः। सम्मुखं चोभयतः आद्वारं पंक्तिद्वयमासन्दीनाम्। आसन्दीनामेकस्यां तिलोत्तमा नाम्नी राजनर्तकी नृत्याय कृतोपस्कारा तिष्ठति। तत्पार्श्वमेवैको वादकः साधयति वीणाम्, अपरश्च मुरजम्।)

देवपालः—देव ! सुमनसां समग्रां सौरभसम्पदं दधानः समुपस्थितो मधुमासः। परितश्चोन्मादिनी छायेव नृत्यति प्रकृतिः। पलाशबकुलाशोकतिलकशोभाञ्जनबन्धूकजपाजातिनवमल्लिकादीनां कुसुमानां सुरभिभिः

---

# दूसरा अङ्क

(यवनिका के पृष्ठ भाग में वीणा, मुरज आदि वाद्यों की ध्वनि सुनाई देती है। राजसभा का दृश्य है। सभाभवन के पूर्व दिशा में मध्य भाग में ऊँची वेदिका के बीच में रत्नों से जड़े सुवर्णनिर्मित सिंहासन पर महाराज सुदर्शन विराजमान हैं। नीचे दोनों ओर दो बहुमूल्य पीठासन हैं। दाहिनी ओर के पीठासन पर राजकुमारी विद्योतमा और बाईं ओर पर प्रधान अमात्य देवपाल बैठे हैं। आगे दोनों ओर द्वार पर्यन्त चौकियों की दो पंक्तियाँ हैं। इन चौकियों के एक ओर तिलोत्तमा नाम की राजनर्तकी नृत्य के लिये तत्पर खड़ी है। उसके पार्श्व में एक वादक वीणा को और दूसरा वादक मुरज को साध रहे हैं)।

देवपाल—देव ! सम्पूर्ण पुष्पों की सुगन्धि की सम्पत्ति को धारण करके मधुमास उपस्थित हो गया है। चारों ओर प्रकृति उन्मत्त छाया के समान नाच रही है। पलाश, मौलसिरी, अशोक, तिलक, सुहाजन, बन्धूक, हुडहुल, चमेली,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रजोभिश्च व्यापिताः दिग्विभागाः । विकसितसहकारसुरभित-मञ्जरीणामास्वादनेन सञ्जातोन्मादानां पिकानां मधुरकुहूरवाः परितः बधिरयन्ति पान्थान् । उपनगरवर्तिषु राजोद्यानेषु पुष्पाकरमासोद्भिन्नैः पल्लवैः पुष्पैश्चोत्सवानामायोजनमिव कृतमभिलक्ष्यते । राजवाटिकाः साधारणनागरिकेभ्योऽप्यनुमतप्रवेशाः वर्तन्ते । राजपथेषु महापथेषु स्यन्दनेषु गजेषु च विराजमानाः विलासिनो युवकाः प्रणयिनीभिः सार्धं वसन्तस्य रम्यभोगान् भुञ्जानाः संलक्ष्यन्ते । अन्ये च साहसिकाः जनाः वाजिरोहणचातुर्यं प्रदर्शयन्तो लोहबद्धशफप्रहारध्वनिभिर्हयानां कुट्टिमपथेषु दिगन्तान् बधिरयन्ति । सन्ध्यात आनिशीथं नागरिकैः नागरिकाभिश्च तत्रोन्मत्तीभूय आनन्दसर्जना सृज्यते ।

**महाराजः**—अमात्यः राज्यप्रशासनस्थैर्ये सत्येव प्रकृतेः रामणीयकं सौन्दर्यं च जनान् रमयति । बाह्यास्वाभ्यन्तरीषु विपत्स्वपगतासु सतीष्वेव निर्भयैः प्रजाजनैरेवं विहरणं कर्तुं पार्यते काम्यते च ।

---

नवमल्लिका आदि पुष्पों की सुगन्धियों और परागों ने दिशाओं को व्याप्त कर लिया है । खिली हुई आम्रमञ्जरियों को खाने से उन्मत कोयलों के मधुर स्वर चारों ओर पथिकों को बहरा बना रहे हैं । नगर से बाहर राजकीय वाटिकाओं में चैत्र मास में विकसित पल्लवों और पुष्पों के उत्सवों का आयोजन सा किया जा रहा है । वाटिकाओं में सामान्य जनों को जाने की अनुमति दे दी गई है । राजपथों और महापथी में रथों और हाथियों पर विराजमान विलासी युवक प्रेमिकाओं के साथ वसन्त ऋतु के रम्य भोगों का उपभोग करते दिखाई देते हैं । दूसरे साहसी मनुष्य घुड़- सवारी के कौशल को दिखाते हुये पक्के रास्तों पर कीलों से जड़े खुरो के प्रहारों की ध्वानियों से दिगन्तों को बहरा कर रहे हैं । साँझ से आधी रात तक नागरिक और नागरिकायें वहाँ उन्मद होकर आनन्द की सृष्टि कर रहे हैं ।

**महाराज**—अमात्य ! प्रकृति की रमणीयता और सौन्दर्य मन को तभी तक अच्छे लगते हैं; जबकि राज्य में स्थिरता हो । बाह्य और आन्तरिक आपत्तियों के दूर होने पर ही प्रजाजन निर्भय होकर विहार करने की इच्छा कर सकते हैं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**देवपालः**—सत्यमेव कथयति देवः । देवस्य नीतिकौशलेन सर्वत्र सुख-सन्तोषयोः सृष्टिः कृता । उज्जयिन्याः सम्राजा विक्रमादित्येन सह सन्धिः बाह्यानामाभ्यन्तरीणां च विपदां संत्रासदायिनीनामपोहिकोऽवर्तत ।

**महाराजः**—सम्राट् विक्रमादित्य....। (किमपि विचार्य) विलक्षणः सः विलक्षणाश्चास्य शक्तयः । विचित्रास्तस्य नीतयः । मन्ये, शौर्यं तस्य किङ्करः। नीतयः वशंवदाः । विद्यावता तेन विदुषामादरो विधीयते । अपि च रक्ताननाः दुर्दान्ताः शकास्तेन पशुमारं मारयित्वा भारतवर्षस्य सीमभ्योऽतिदूरपसारिताः । पुनरपि स धर्मस्य विद्यायाश्च प्रतिठ्ठमकार्षीत् । सम्प्रति समग्रा भारतभूः सम्राजो विक्रमादित्यस्य कीर्त्या धवलितेव वर्तते । अस्माभिस्तेन वीरेण नीतिज्ञेन विद्याव्यसनिना च सम्राजा सन्धिं कृत्वा तस्य संरक्षणं च स्वीकृत्य प्रजाजनहिताय समुचितमाचरितम् ।

**देवपाल**—तथ्यमेव भणति देवः । सम्राजा विक्रमादित्येन सह सम्पादितः सन्धिरस्माकं राज्यस्य वैभववर्धकः समृद्धिदायी च वर्तते । "राजा

---

**देवपाल**—देव ! आप सत्य ही कहते हैं । देव की नीति-कुशलता ने सब स्थानों पर सुख और सन्तोष की सृष्टि कर दी है । उज्जयिनी के सम्राट् विक्रमादित्य से सन्धि करने से संत्रासदायी बाह्य आन्तरिक विपत्तियाँ नहीं रही हैं ।

**महाराज**—सम्राट् विक्रमादित्य... । (कुछ विचार करके) वे विलक्षण है । उनकी शक्तियाँ विलक्षण हैं । उनकी नीतियाँ विलक्षण हैं । मैं समझता हूँ कि शौर्य उनका सेवक है और नीति उनके आधीन है । वे स्वयं तो विद्वान् का आदार भी करते हैं । लाल मुखों दुर्दान्त शकों को उन्होंने पशुओं के समान मार-मार कर भारत-वर्ष की सीमाओं से बाहर खदेड़ दिया है । उन्होंने धर्म और विद्या की पुनः प्रतिष्ठा की है । आज भारतवर्ष की सारी भूमि उस सम्राट् की कीर्ति से धवल हो गई है । प्रजा के हित के लिये उस वीर, नीतिज्ञ और विद्याव्यसनी सम्राट् से सन्धि करके और संरक्षण स्वीकार करके हमने ठीक ही किया है ।

**देवपाल**—देव ठीक कहते हैं । सम्राट् विक्रमादित्य के साथ की गई सन्धि हमारे राज्य में समृद्धि और वैभव को बढ़ाने वाली हुई है । प्रजा का रञ्जन करने

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकृतिरञ्जनाद्" इति धर्ममनुसृत्य नृपस्य प्रथमं कर्तव्यम्—"प्रजानां रक्षणं कृत्वा सुखसन्तोषवर्धनं मनसा च रञ्जनम्।" अस्माकं प्रजाजनाः सुखिनः सन्तुष्टाश्च वर्तन्ते।

**महाराज**—चारचक्षुषो हि राजानः। वयमपि चारचक्षुर्भिः प्रजानां सुखदुःखानि भद्रक्षेमं च सततं निरीक्षामहे।

**देवपाल**—देव! अस्माकं प्रणिधयो न केवलं स्वदेशे, अपितु विदेशेष्वपि सदा सावधानाः वर्तन्ते। राज्यस्य आभ्यन्तरीणवाह्यस्थिरतायै गुप्तचराणां सुस्थिरा स्थितिरपेक्ष्यते। शान्तिसमये युद्धकाले च एषा व्यवस्थितिरुभयथा उपयोगिनी भवति।

**महाराजः**—प्रजानां कल्याणकामनयाऽस्माभिरनेकानि जनकल्याणकार्याणि विहितानि। क्षेत्राणां परिषिञ्चनार्थं कूपकुल्यादीनां, यातायातसौकर्याय च नवीनपथानां निर्मितिः कारिता। मार्गानुभयतः प्रच्छायवन्तः फलवन्तश्च पादपाः समारोपिताः। देवमन्दि-

---

से ही राजा होता है, इस नियम के अनुसार राजा का प्रथम कर्त्तव्य है—"प्रजा के सुख और सन्तोष को बढाना, अनुरञ्जन करना"। हमारी प्रजा सुखी और सन्तुष्ट है।

**महाराज**—राजा गुप्तचारों की आँखों से देखते है। हम भी प्रजाजनों के सुख दुःख को गुप्तचरों की आँखों से देखते हैं।

**देवपाल**—देव! हमारे गुप्तचर न केवल अपने देश में, अपितु विदेशों में भी सदा सावधान करते हैं। राज्य की आन्तरिक और बाह्य स्थिरता को बनाये रखने के लिये गुप्तचरों की सुदृढ व्यवस्था होनी चाहिये। शान्ति और युद्ध दोनों समयों में यह व्यवस्था उपयोगी है।

**महाराज**—प्रजा के कल्याण की कामना से हमने अनेक जन-कल्याणकारी कार्य किये हैं। खेतों की सिंचाई के लिये कुओं और नहरों को तथा आवागमन की सुविधा के लिये सड़कों को बनवाया गया है। सड़कों के दोनों ओर छाया तथा फल वाले वृक्ष आरोपित किये गये हैं। नदियों पर बाँध और पुल बने हैं।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राणि, यज्ञशालाः, धर्मशालाः, अनाथालयाः, सत्राणि, चिकित्सालयाः इत्यादिसंस्थाः प्रजासु निरान्तरं धर्मं सुखं च वर्धयन्ति ।

**देवपालः**—अत एवाऽस्माकं सस्यसमृद्धिसमेधिते दक्षिणकोसले सुखं वर्धते शान्तिश्च नित्यं प्रसरति । प्रजाश्च सर्वाः कुशलिन्यः ।

**महाराजः**—प्रजानां मनोरुजनमप्यभीप्सितमस्माकम् । नाट्यशालानां, नृत्यगृहाणामुद्यानानामन्येषां, च मनोरञ्जनस्थानानां व्यवस्था विद्यते । (राजकुमारीं दृष्ट्वा) स्वयं राजकुमारी विद्योत्तमा मनोरञ्जनकार्याणां सञ्चालिका निरीक्षिका च । सर्वेजनाः "कुशलिनः सुखिनः सन्तु" इत्येवाऽस्माकं धर्मः ।

**विद्योत्तमा**–पितृमहाभागाः ! एतेषा सञ्चालने प्रर्कचालने मयाऽपि स्वान्तः सुखमनुभूयते । अहं सततमेतस्याः व्यवस्थायाः समुन्नत्यै प्रयत्नपरायणा वर्ते । नागरिकास्तु बह्वीषु संख्यासु स्वस्थं मनोऽरञ्जनं लभन्ते । (नर्तकीं सङ्केतयित्वा) पितृमहाभागाः ! इयं तिलोत्तमा चिरेण भवतामादेशं

---

मन्दिर, यज्ञशालायें, धर्मशालायें, अनाथालय, अन्नक्षेत्र, चिकित्सालय आदि संस्थायें प्रजाजनों में निरन्तर धर्म और सुख की वृद्धि करती हैं ।

**देवपाल**—इसका ही परिणाम है कि हमारे धान्यों से समृद्ध दक्षिण कोसल देश में सुख और शान्ति निरन्तर बढ रहे हैं । सारे प्रजाजन कुशल से हैं ।

**महाराज**—हम प्रजा का मनोरञ्जन भी चाहते हैं । उद्यानो, नाट्यशालाओं, नृत्यगृहों तथा अन्य मनोरञ्जन-स्थानों की व्यवस्था है । (राजकुमारी की ओर देख कर) स्वयं राजकुमारी विद्योत्तमा मनोरञ्जन के कार्यों का संचालन और निरीक्षण करती हैं । सब जन कुशल से रहें, यही हमारा धर्म है ।

**विद्योत्तमा**—पिता जी ! संचालन में मैं स्वयं सुख और शान्ति का अनुभव करती हूं । सबकी उन्नति के लिये मैं निरन्तर प्रयत्नशील रहती हूं । नागरिक बहुत संख्या में स्वस्थ मनोरंजन पाते हैं । (नर्तकी की ओर संकेत करके) पिता जी ! यह विद्योत्तमा बहुत समय से आपके आदेश की प्रतीक्षा कर रही है । (राजनर्तकी

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रति—पालयति । (राजनर्तकी शनकैः स्वशिरोऽवनमय्य पदमुत्थाय भूमौ निदधाति । किङ्किणीनां मधुरो ध्वनिः सभाभवनमभिव्याप्नोति ।)

**महाराजः**—वार्तालापेषु त्वहमेतस्याः व्यस्मरमेव । (अमात्यमुन्मुखीभूय) अमात्य ! राजनर्तकी कैः भावैः नृत्यतु ?

**देवपालः**—देव ! ऋतुराजवसन्तस्य नवागमनं सँवृत्तम् ।

**विद्योत्तमा**—पितृमहाभागाः ! तथ्यं वदत्यमात्यः ।

**महाराजः**—तिलोत्तमे ! वसन्तर्तोः भावाभिव्यञ्जकं नृत्यमभिनेतव्यम् । नर्तकी साभिनयँ हस्तौ मुकुलीकृत्य शिरोऽवनमय्य किङ्किणीनांताललयबद्धं स्वरमुत्थापयन्ती सभाभवनमध्यमवगाहते । वादकौ वीणायाः मुरजस्य च स्वरान् साधयन्ति । नर्तकी नृत्यन्ती वसन्तरागेण गायति)

एष कोकिलो गायति मधुरम्
पथिक मया साकं नु चल त्वम् ।

---

(धीरे से अपना सिर झुका कर पैर उठा कर भूमि पर रख देती हैं । घुंघरूओं की मधुर ध्वनि सभाभवन में गूंज जाती है) ।

**महाराज**—वार्तालाप के मध्य मैं इस बात को तो भूल ही गया था । (अमात्य की ओर उन्मुख होकर) अमात्य ! राजनर्तकी किन भावों का अभिनय करे ?

**देवपाल**—देव ! ऋतुराज वसन्त का नव आगमन हुआ है ।

**विद्योत्तमा**—पिताजी ! अमात्य ठीक कहते हैं ।

**महाराज**—तिलोत्तमे ! वसन्त ऋतु भावों का अभिव्यञ्जक नृत्य प्रस्तुत करो । (नर्तकी अभिनय के साथ हाथों को जोड़ कर सिर को झुका लेती है । तदनन्तर घुंघरुओं के ताल-लय से युक्त स्वर को उत्पन्न करती हुई सभाभवन के मध्य में आ जाती है । वादक वीणा और मुरज के स्वरों को साधते हैं । नर्तकी नाचती हुई वसन्त राग में गाती है) ।

कोयल गाती मधुर स्वरों में
अरे पथिक साथ मेरे चल ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आम्रकुञ्जगतमृदुमञ्जर्यः
सरसि सरसिजानामपि ततयः ।
मधुरससम्भृतसुरभितपवनः
येन वर्धते मनसि नु मदनः ॥

एष कोकिलो गायति मधुरम्
पथिक मया साकं नु चल त्वम् ।

भ्रमरीयं मधुपानोन्मता
भ्रमराः तत्सङ्गेनोन्मताः ।
अलिगुञ्जितसुमनोधनुषाऽयम्
प्रहरति कामो निर्दयमेवम् ॥

एष कोकिलो गायति मधुरम्
पथिक मया साकं नु चल त्वम्

---

आम्रकुञ्ज की मृदु मञ्जरियाँ
सरस सरोवर की सरसिजिया ।
मधुरस सम्भृत सुरभित सुपवन
मद भर भर देते आमन्त्रण ॥

कोयल गाती मधुर स्वरों में
आरे पथिक साथ मेरे चल ॥

भ्रमरी ने मधुपान किया है
भ्रमरो को उन्माद दिया है ।
अलिगण गुञ्जित सुमन धनुष पर
बाधित करता रतिपति सुमशर ॥

कोयल गाती मधुर स्वरों में
आरे पथिक साथ मेरे चल ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नवकलिकानवपुष्पचयोऽयम्
भ्रमरैर्गुञ्जितसहकारोऽयम् ।
मृगाः मृगीभिः समनुचरन्ति
नीले वियति हि खगाः लसन्ति ॥

एष कोकिलो गायति मधुरम्
पथिक मया साकं नु चल त्वम् ॥

प्रकृतिनटीयं सुन्दरवेषा
पुष्पपल्लवैरावृतदेहा ।
तिर्यग्दृष्टिविलोकनपूर्वम्
सर्वानेव विमोहयतीयम् ॥

एष कोकिलो गायति मधुरम्
पथिक मया साकं नु चल त्वम् ।

---

नव कलिकायें पुष्प खिले हैं
आम्र भ्रमर से गूंज रहे हैं ॥
मृगियों के पीछे मृग चलते
नील गगन में खगा विहरते ॥

कोयल गाती मधुर स्वरो में
आरे पथिक साथ मेरे चल ॥

प्रकृति ने श्रृंगार किया है
पत्र-पुष्प से देह सजा है ।
नयनों की तिरछी चितवन से
सबका ही मन मुग्ध किया है ॥

कोयल गाती मधुर स्वरों में
आरे पथिक साथ मेरे चल ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उत्सवमग्ना वसुन्धरेयम् ।
नवरसरङ्गैः बहुकृतशोभम् ।
सानन्दं त्वं पथिक विचर रे
भ्रमपरिबन्धं ननु नष्टं ते ॥

एष कोकिलो गायति मधुरम्
पथिक मया साकं नु चल त्वम् ।

यत्ते निकटं तद्ग्रहणीयम्
सृष्टिरहस्यं कस्य न विदितम् ।
कर्मसूत्रमवलम्ब्य स्वकीयम्
जीवनतत्वं संस्मरणीयम् ॥

एष कोकिलो गायति मधुरम्
पथिक मया साकं नु चल त्वम् ॥

---

उत्सवमाना वसुन्धरा है
नव रस रङ्गों की शोभा है।
जी भर कर आनन्द मना ले
भ्रम के बन्धन नष्ट करा ले ॥

कोयल गाती मधुर स्वरों में
आरे पथिक साथ मेरे चल ॥

जो समीप है, उसे ग्रहण कर
जग की रीति सोच समझ कर।
कर्मसूत्र का अवलम्बन कर
जीवन-पथ को सदा स्मरण कर ॥

कोयल गाती मधुर स्वरों में
आरे पथिक साथ मेरे चल ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(गीतविरतौ तिलोत्तमा नृत्यमुद्रया करौ मुकुलीकृत्य
नृपसम्मुखीना तिष्ठति ।)

**महाराजः**—मधुरमधुरमतीर्व सुन्दरम् । वसन्तोः भावाना मेतादृशो गीतिमधुरो मधुररसोऽभिनयो न मया कदाप्यवलोकितः नवाऽभिलक्षितः । अनुपमं ह्येतत् । गृहाण पारितोषिकम् ।

(महाराजः स्वग्रीवातो मौक्तिहारमवतार्य राजनर्तक्यै उपहरति नर्तकी तं गृहीत्वा सभाभवनाद् निर्गच्छति । वादका अपि तामनुसरतः ।)

**महाराजः**—(विद्योत्तमा निरीक्ष्य) अमात्य !

**देवपालः**—देव !

**महाराजः**—चिन्तैषा तु सजीवकं मां सबाह्यान्तः करणं दहति ।

**देवपालः**—देव ! भवतश्चिन्तायाः विषय एव कः ? केवलं राजकुमार्याः विवाह एव ।

---

(गीत समाप्त होने पर तिलोत्तमा नृत्य की मुद्रा में हाथों को जोड़ कर राजा के समक्ष खड़ी हो जाती है) ।

**महाराज**—बहुत मधुर, बहुत सुन्दर, । वसन्त ऋतु के भावों का इतना मधुर गीत मैंने अब तक कभी नहीं देखा था । इसकी तो कोई उपमा नहीं है । यह इनाम तो—(महाराज अपने गले से मोतियों का हार उतार राजनर्तकी को उपहार देते हैं । नर्तकी उसको लेकर सभाभवन से बाहर जाती है । वादक भी उसके पीछे चले जाते हैं) ।

**महाराज**—(विद्योत्तमा की ओर देख कर) अमात्य !

**देवपाल**—देव !

**महाराज**—यह चिन्ता तो मेरे अन्तःकरण और बाह्यकरण को जीवित ही जलाये दे रही है ।

**देवपाल**—देव ! आपके लिये चिन्ता का विषय ही क्या हो सकता है ? केवल राजकुमारी का विवाह ही...।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**महाराजः**—अयमेव तुं चिन्तायाः महान् हेतुः । यौवनं प्रतिपद्यमाना कन्या पितुश्चिन्ताया महत्तमं मूलम् । कन्यायै वरस्यानुगुणस्यान्वेषणं विवाहानन्तरं च तस्याः सुख—दुःखयोश्चिन्ता दहत्येव जनकस्य हृदयम् । कन्याजनकस्य क्व सुखं क्व वा शान्तिः ?

**देवपालः**—देव ! को लाभश्चिन्तादहने स्वात्मनो हवनेन ? राजकन्यायै योग्यवराणाम्...।

**महाराजः**—इयमेव विपत्तिः । लभ्यते कोऽपि योग्यो वरः । एकतस्तु दुहितृभ्यो योग्यवराणा—मन्वेषणमेव जनकानामविषह्या विपत्तिः, अपरतश्च विद्योत्तमायाः दुस्तरा प्रतिज्ञा—"यो मां जयति शास्त्रार्थे स मे भर्ता भविष्यति" । एवंविध उद्भटो विद्याप्रकर्षवान् तरुणो भुवि क्व लभ्यते ?

**देवपालः**—देव ! अस्माकं राजकुमारी विद्याया अनन्तो निधिः । नैतावत्तां कश्चित् पराजेतुं क्षमोऽभवत् ।

**महाराजः**—एषैवास्माकं महती विपत्तिः । कथमिव सम्पत्स्यते परिणयोऽस्याः ?

---

**महाराज**—यही तो चिन्ता का महान् कारण है। युवती होती हुई कन्या पिता के लिये चिन्ता का सबसे बड़ा कारण है। कन्या के लिये अनुरूप वर को खोजना और विवाह के बाद वह सुख पायेगी या नहीं, यह चिन्ता पिता के चित्त को जलाती ही रहती है। कन्या के पिता को सुख कहाँ और शान्ति कहाँ ?

**देवपाल**—देव ! अपने आपको चिन्ता की आग में जलाने से कोई लाभ नहीं है। राजकुमारी के लिये योग्य वरों की... ।

**महाराज**—यही तो विपत्ति है। कोई योग्य वर नहीं मिलता। एक तो कन्याओं के लिये योग्य वरों का खोजना ही पिताओं के लिये महान् विपत्ति है, दूसरे इस विद्योत्तमा की भीषण प्रतिज्ञा है—"जो मुझको शास्त्रार्थ में जीतेगा, वही मेरा पति होगा।" इस प्रकार का उद्भट विद्वान् युवक पृथिवी पर कहाँ है ?

**देवपाल**—देव ! हमारी राजकुमारी विद्या की अपार निधि है। अब तक उसको कोई पराजित नहीं कर सका।

**महाराज**—यही तो हमारी बड़ी मुसीबत है। इसका विवाह कैसे होगा ?

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**देवपालः**—राजकुमार्याः प्रतिज्ञेयं समुचितैव। इयं सरस्वत्याः साक्षादवतारः। कन्यायै गुणानुरूप एव वरोऽन्विष्यते। गुणी गुणिनमेव संगच्छते। यथार्थेयं भणितिः—"समानशीलव्यसनेषु सख्यम्" इति।

**महाराजः**—परमीदृशो योग्यो वरो विद्वान् कुत्रात्र भरतखण्डे? वर्षत्रयं व्यतीतम्। अनेके विद्वांसो राजकुमाराः युवानः स्नातकाश्चैनां वरयितु-कामा आयान्ति, परं शास्त्रार्थे पराजयजनितमपमानं लज्जां चानुभवन्तो निवर्तन्ते। किं भारतभूरेषा विद्वच्छून्या?

**देवपालः**—अलमेताभिः व्यर्थाभिः दुश्चिन्ताभिः मनो निरर्थकं नोत्पीडनीयम्। विदेहोऽपि जनको भगवतीं सीतां निरीक्ष्य चिन्तयति स्म—"पृथिवीयं वीरैः शून्येति"। शिवधनुः प्रत्यंचाया आरोपणस्य तु कथैव का, तस्योत्थापनेऽपि न बभूव कश्चिद् वीरः समर्थः। परं भगवान् रामो भङ्क्त्वा तद्धनुः उत्तीर्य प्रतिज्ञार्णवमवृणोज्जानकीम्। कन्यायाः जन्मनः पूर्वमेव सृजति विधिः तस्याः परिणेतारम्।

---

**देवपाल**—राजकुमारी की यह प्रतिज्ञा ठीक ही है। यह सरस्वती की साक्षात् अवतार है। कन्या को अनुरूप ही वर मिलना चाहिये। गुणी का गुणी से ही मिलन होता है। यह कहावत ठीक है कि समान स्वभाव और आदत वालों में ही मित्रता होती है।

**महाराज**—परन्तु राजकुमारी के योग्य ऐसा विद्वान् वर इस भारतवर्ष में कहाँ है। तीन वर्ष बीत गये। अनेक विद्वान् राजकुमार और स्नातक युवक इसका वरण करने के लिये यहाँ आते हैं। परन्तु वे पराजय के अपमान और लज्जा का अनुभव करते हुये लौट जाते हैं क्या यह भारतभूमि विद्वानों से रहित हो गई है?

**देवपाल**—यह व्यर्थ की बुरी चिन्तायें न कीजिये। निरर्थक मन को पीड़ित न कीजिये। विदेह जनक भी भगवती सीता को देखकर इसी प्रकार सोचते थे कि यह पृथिवी वीरों से रहित है। शिव के धनुष की डोरी को चढ़ाने की तो बात ही क्या, उसको उठाने में भी कोई वीर समर्थ नहीं हुआ। परन्तु भगवान् राम ने उस धनुष को तोड़ कर प्रतिज्ञा को पूरा किया तथा जानकी का वरण किया। कन्या के जन्म से पहले ही विधि उसके वर की सृष्टि कर देता है।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**महाराजः**—अमात्य ! सत्यं भवतो वचः। परं कन्यायाः परिवर्धमानं वयोऽवलोक्य जनकस्य हृदयं न कथमपि शान्तिमनुभवति।

**देवपालः**—सत्यं वदति महाराजः।

**महाराजः**—अन्या चेयं वार्ता। इयं विद्योत्तमा एवाऽस्माकं सर्वस्वम्। अस्याः परिणेता राज्यश्रिय अस्माकमुत्तराधिकारी। अतस्तस्य वैदुष्यं राजनीत्याऽपि विभूषितं स्यादिति।

**देवपालः**—देव ! अनुमन्ये भवतामिदं वचनम्।

**महाराजः**—यदीयं विद्योत्तमा स्वकीयमिदं शास्त्रार्थनिबन्धं परित्यजेत् ?

**विद्योत्तमा**—(पितरमुन्मुखीभूय)—न हि, न हि, नैतत् सम्भाव्यते। अविचला मे प्रतिज्ञा। यो मां विद्यायामतिशयिष्यते, स एव पाणिं मे ग्रहीष्यति। नाऽहं कमपि मूर्खं वृत्वा पुटपाकानले जुहोम्यात्मानम्।

**महाराजः**—परं पुत्रि...।

---

**महाराज**—अमात्य ! आपका यह वचन सत्य है। परन्तु कन्या की बढ़ती हुई आयु को देखकर पिता के हृदय में किसी भी प्रकार शान्ति नहीं होती।

**देवपाल**—देव ! आप ठीक कहते हैं।

**महाराज**—दूसरी यह भी बात है कि यह विद्योत्तमा ही हमारा सर्वस्व है। इसका पति ही हमारे राज्य का उत्तराधिकारी होगा। अतः उस वर की विद्वत्ता राजनीति से विभूषित होनी चाहिये।

**देवपाल**—देव ! आपके इस कथन का मैं अनुमोदन करता हूँ।

**महाराज**—यदि यह विद्योत्तमा अपने शास्त्रार्थ की जिद को छोड़ दे तो...।

**विद्योत्तमा**—(पिता की ओर उन्मुख होकर) नहीं, नहीं, यह नहीं हो सकता। मेरी प्रतिज्ञा दृढ़ है। जो विद्या में मुझसे अधिक होगा, वही मेरा हाथ पकड़ेगा। किसी मूर्ख के साथ विवाह करके मैं पुटपाक की अग्नि में अपने को आहूत नहीं कर सकती है।

**महाराज**—परन्तु पुत्रि !

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**द्वारपालः**—(प्रविश्य प्रणम्य) विजयतां देवः। देव प्रतिहारभूमिमुपस्थितौ द्वौ पण्डितौ। प्रतीक्षेते च भवदादेशम्। सह ताभ्यामेकः परमतेजस्वी रूप-सम्पन्नो युवा तयोराचार्यः। अभिलषतस्तौ भवतां दर्शनम्।

**महाराजः**—विद्वज्जनास्तु सन्ति राज्ञः सदैव सम्मानपात्राणि। अविलम्बं सादरं प्रवेशय।

**द्वारपालः**—यथाऽऽज्ञापयति देवः। (प्रणम्य बहिर्गच्छति)।

**महाराजः**—सम्भवतोऽयमेव मे चिन्ताऽपहारको भवेत्।

(द्वारपालः पुनः प्रविशति। धूम्रकेतुगोवर्धनौ किञ्चित्परिवर्तितवेशौ तमनु-सरतः। उभयोर्मध्ये महार्हक्षौमवसनविभूषित आचार्यरूपधारी काष्ठ-भारिकः। धवलवसनेषु दीप्तिमत्स्वलङ्कारेषु च ततस्य तेजस्वित।सौन्दर्यं सकलानेव प्रभावयति। महाराजः सुदर्शनः, अमात्यः, राजकुमारी च सर्व एव चकिताः प्रभाविताश्च स्वागतार्थमुत्तिष्ठन्ति। पण्डितान् सभाभवनं

---

**द्वारपाल**—(प्रवेश करके और प्रमाण करके) देव की जय हो। देव द्वारदेश पर दो पण्डित पधारे हैं। वे आपके आदेश की प्रतीक्षा कर रहे हैं। उनके साथ एक परम तेजस्वी रूप और यौवन से सम्पन्न युवक उनका आचार्य है। वे आपका दर्शन करना चाहते हैं।

**महाराज**—राजा के लिये विद्वान् सदा सम्माननीय होते हैं। उनको तुरन्त अन्दर से प्रवेश कराओ।

**द्वारपाल**—देव जैसी आज्ञा देते हैं (प्रणाम करके बाहर जाता है)।

**महाराज**—सम्भवतः ये ही मेरी चिन्ता को दूर करदे।

(द्वारपाल पुनः प्रवेश करता है। धूम्रकेतु और गोवर्धन उसके पीछे आते हैं। उनका वेश कुछ वदला हुआ है। दोनों के मध्य में बहुमूल्य रेशमी वस्त्रों को धारण किये हुये और आचार्य का रूप बनाये हुये लकड़हारा है। शुभ्र रेशमी वस्त्रों में और चमकते हुये अलङ्कारों में उसका तेजस्वी सौन्दर्य सबको प्रभावित करता है। महाराज सुदर्शन, अमात्य और राजकुमारी सभी चकित और प्रभावित होकर स्वागत के लिये खड़े होते हैं। पण्डितों को सभाभवन में पहुंचा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रापय्य द्वारपालः बहिर्गच्छति । आचार्यरूपधारी काष्ठभारिकः शुभाशीर्वादमुद्रया हस्तौ समुत्थाप्य पुनः नीचैः करोति ।)

धूम्रकेतुः—राजन् ! अवनमय द्विषतां शिरांसि ।

गोवर्धनः—राजन् ! भवतु सदा धर्मे तेऽभिरुचिः ।

महाराजः—(अमात्यस्य कर्णे शनकैः) अमात्य ! एतौ पण्डितौ प्रत्यभिज्ञाताविव लक्ष्येते । परं सुचारु प्रत्यभिज्ञानं न सुकरम् । अहो ! एताभ्यां सह अयमत्यन्तं तेजस्वी रम्यवपुष्मान् कः, यमवलोक्य सुप्रीत्याऽहं मनसि स्नेहरससंसिक्तमात्मानमनुभवामि ।

देवपालः—(मन्दस्वरेण) समाकृतयोऽनेके जना अवतरन्ति दृष्टिपथं जगत्यस्मिन् । परमयं युवा अनुपमसौन्दर्यसम्पदा सम्पन्नः । ईदृशं रूपम्, एतादृशी तेजस्विता च न कदाचित् दृष्टपूर्वे ।

धूम्रकेतुः—राजन् ! (काष्ठभारिकं लक्ष्यीकृत्य) एतेऽस्माकमाचार्याः श्रीमन्तः

---

कर द्वारपाल बाहर चला जाता है । आचार्य-वेशधारी लकड़हारा आशीर्वाद की मुद्रा में दोनों हाथ उठाकर नीचे कर लेता है) ।

धूम्रकेतु—राजन् ! शत्रुओं के सिरों को झुका दो ।

गोवर्धन—राजन् ! तुम्हारी सदा धर्म के प्रति अभिरुचि हो ।

महाराज—(अमात्य के कान में धीरे से) अमात्य । ये पण्डित तो कुछ पहचाने से लगते हैं । परन्तु अच्छी तरह पहचानना सरल नहीं है । इनके साथ यह अत्यधिक तेजस्वी सुन्दर शरीर वाला कौन हो सकता है । इसको देखकर मैं अपने मन को स्नेह से भरा अनुभव करता हूँ ।

देवपाल—(धीरे से) समान आकृति वाले अनेक मनुष्य इस संसार में दिखाई दे जाते हैं । परन्तु इस युवक का सौन्दर्य तो अनुपम है । इस प्रकार का रूप और ऐसी तेजस्विता इससे पहले कभी नहीं देखी ।

धूम्रकेतु—राजन् ! (लकड़हारे की ओर लक्ष्य करके) ये हमारे आचार्य श्रीमान्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दर्शनाचार्याः। स्वल्प एव वयसि एभिरधीताः सर्वाः विद्याः। निष्णाताः सर्वेषु शास्त्रेषु। असामान्यज्ञानेन, विशेषतस्तु दर्शनशास्त्र-राजशास्त्रयोः, अनुपमायाश्च प्रतिभायाः प्रभावेण इमे विश्वविद्यालये आचार्यस्यविशिष्ट-पदमलङ्कुर्वन्ति। विविधशास्त्राणां गभीरज्ञानेन सह व्यावहारिकराजनीतावपि निष्णाताइमे।

**महाराजः**—(दर्शनाचार्यं प्रणम्य) आचार्यमहोदयानां शुभागमनेन पावनीभूतमिदं सभाभवनम्। वयमनुगृहीताः। अलङ्कुर्वन्तु भवन्त एतदासनम्। (धूम्रकेतु गोवर्धनं च लक्ष्यीकृत्य) पण्डितप्रवरौ भवन्तावपि आसनें अलङ्कुरुताम्।

(धूम्रकेतुगोवर्धनौ साहाय्येन दर्शनाचार्यं निर्दिष्टासनमध्यासयतः स्वं स्वं चासनमधितिष्ठतः। राजा, अमात्यः राजकुमारी च स्वकीयान्यासनानि अधितिष्ठन्ति।)

**महाराजः**—आचार्यमहोदयाः! भवतां दर्शनेनातीवानुगृहीताः वयम्। समुचितेनादेशेन कृतार्थयन्तु।

---

दर्शनाचार्य हैं। छोटी आयु में ही इन्होंने सारी विद्यायें पढ़ ली और सब शास्त्रों में निष्णात हो गये। अपने असामान्य ज्ञान से, विशेष रूप से दर्शनशास्त्र और राजशास्त्र के ज्ञान से तथा अनुपम प्रतिभा के प्रभाव से ये विश्वविद्यालय में आचार्य के पद को अलङ्कृत करते हैं। अनेक शास्त्रों के गम्भीर ज्ञान के साथ ये व्यावहारिक राजनीति में भी अत्यन्त कुशल हैं।

**महाराज**—(दर्शनाचार्य को प्रणाम करके) आचार्य महोदय के शुभ आगमन से हमारा यह सभा भवन पवित्र हो गया है। अत्यधिक अनुगृहीत है। आप इस आसन को सुशोभित करे। (धूम्रकेतु ओर गोवर्धन की ओर संकेत करके) पण्डित श्रेष्ठो! आप भी अपने आसनों को अलङ्कृत करे।

(धूम्रकेतु और गोवर्धन सहायता देकर दर्शनाचार्य को निर्दिष्ट आसनों पर बैठाते हैं। स्वयं भी दोनों ओर रक्खे हुये आसनों पर बैठ जाते हैं। राजा, अमात्य और राजकुमारी भी अपने आसनों पर बैठते हैं)।

**महाराज**—आचार्य महोदय! आपके दर्शनों से हम बहुत अनुगृहीत हुये। उचित आदेश देकर कृतार्थ करें।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धूम्रकेतु—राजन् ! पूर्वमेव निवेदितम्। आचार्यमहाभागैरल्प एव वयसि सर्वेषां + शास्त्राणां ज्ञानमधिगतम्। वेदाः, वेदाङ्गानि, उपवेदाः ब्राह्मण-ग्रन्थाः, उपनिषदः, सूत्रग्रन्थाः, स्मृतयः, पुराणानि, धर्मशास्त्रम्, अर्थशास्त्रं, दण्डनीतिः, काव्यम्, इतिहासः, ज्योतिर्विद्या, वास्तुविद्या, विविधाः कला इति सर्वमेवैतद् हस्तामलकवत् साधितम्। गुरुजनैः द्वितीयाश्रमाय अनुमत्या सत्यामपि अत्र भवद्भिः एतावत्कालपर्यन्तं वृता न काऽपि कन्या। स्वगुणानु-रूपा विदुषी रूपवती च जीवसङ्गिनी कामिनी काम्यते। इत्येवात्रागमन-कारणम्। आचार्यमहाभागानां सङ्कल्पः—

रूपं श्रीः यौवनं शीलं विद्यायाः व्यसनं भवेत्।
परिणेयैव सा बाला यत्र चैवात्मरूपता ॥

देवपालः—आचार्यमहोदयानां सङ्कल्पः पाण्डित्यस्य सौन्दर्यस्य च सर्वथैवानु-रूपतां भजते।

धूम्रकेतुः—विद्योत्तमायाः महाराजसुतायाः पाण्डित्यसौन्दर्यादिगुणकीर्तिकौमुदी

---

धूम्रकेतु—राजन्! मैंने पहले ही निवेदन किया था कि हमारे आदरणीय आचार्य ने अल्प आयु में ही सब शास्त्रों का ज्ञान प्राप्त कर लिया। वेद, वेदाङ्ग, ब्राह्मण-ग्रन्थ, उपनिषद्, सूत्रग्रन्थ, स्मृतिया, पुराण, धर्मशास्त्र, अर्थशास्त्र, दण्डनीति, काव्य, इतिहास, ज्योतिष, वास्तुविद्या, कलायें आदि सभी इनको हाथ पर रखे आँवले के समान सिद्ध हैं। गुरु के द्वारा दूसरे आश्रम में प्रवेश करने की अनुमति मिलने पर भी आपने अभी तक विवाह नहीं किया। अपने गुणों के अनुरूप विदुषी तथा रूपवती कन्या जीवन-सङ्गिनी की कामना है। यही आने का कारण है। आचार्य जी का यह संकल्प है—

रूप यौवन शील विद्या कान्ति की शुभ सम्पदा।
परिणीत हो बाला वही जिसमें गुणों की तुल्यता ॥

देवपाल—आचार्य का यह संकल्प उनके पाण्डित्य तथा सौन्दर्य के सर्वथा अनुरूप है।

धूम्रकेतु—महाराज सुदर्शन की कन्या विद्योत्तमा के पाण्डित्य और सौन्दर्य आदि गुणों की कीर्तिरूपी कौमुदी छोटी आयु में ही विश्व को प्रसाधित कर रही है।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रसाधयति सकलमेव भुवनम् । तद्यशोभिः व्याधगीतिभिः समाकृष्णमाणा मृगा इव अस्माकमाचार्यमहाभागाः योग्यतायाः परीक्षायै समागताः ।

(प्रशंसां निशम्य विद्योत्तमा दर्शनाचार्यं तिर्यङ् निरीक्ष्य अधोभूमिं पश्यन्ती कण्ठविभूषणमुक्तादाम्नो मुक्ताः गणयति ।)

**देवपालः**—परम्...।

**धूम्रकेतुः**—राजकुमार्याः दर्शनेन धन्याः वयम् । यशोऽनुरूपमेव अत्रभवत्याः रूपं, कुलं, शीलं वैदुष्यं च । यदि महाराजोऽनुमनुते ?

**देवपालः**—परं राजकुमार्याः प्रतिज्ञा...।

**धूम्रकेतुः**—प्रतिज्ञा चेयं विश्वस्मिन् लोके प्रथिता । आचार्यमहाभागानामपि श्रुतिगोचरतां गता । भवतु तावच्छास्त्रार्थः ।

**महाराजः**—(दर्शनाचार्यस्य सौन्दर्येण तेजस्वितया च प्रभावितः) पण्डितप्रवर !

---

यश से व्याधगीति से हरिणों के समान आकृष्ट हमारे आचार्य जी योग्यता की परीक्षा के लिये उपस्थित हुये हैं ।

(प्रशंसा को सुन कर, विद्योत्तमा दर्शनाचार्य की ओर तिरछी दृष्टि डाल कर नीचे भूमि को देखती हुई कण्ठ को अलङ्कृत करने वाले मुक्ताहार के मोतियों को गिनने लगती है) ।

**देवपाल**—परन्तु...।

**धूम्रकेतु**—राजकुमारी के दर्शनों से हम धन्य हो गये हैं । यश के अनुरूप ही उनके रूप, कुल, शील और विद्वत्ता है । यदि महाराज की अनुमति हो...।

**देवपाल**—परन्तु राजकुमारी की प्रतिज्ञा...।

**धूम्रकेतु**—यह प्रतिज्ञा सारे विश्व में प्रसिद्ध है । आचार्य महाभाग ने भी यह बात सुनी है । तो शास्त्रार्थ हो जावे ।

**महाराज**—(दर्शनाचार्य के सौन्दर्य और तेजस्विता से प्रभावित होकर) पण्डितश्रेष्ठ !

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवतु तावच्छाच्छास्त्रार्थः। आचार्यमहोदयानां विजय श्चेत् सौभाग्यमेवास्माकम्। (राजकुमारीं दृष्ट्वा) वत्से! तवात्र किं मतम्?

(राजकुमारीं लज्जावनतमुखी स्वीकृतिसूचकं शिरश्चालयति।)

**महाराजः**—अमात्य! शास्त्रार्थस्य प्रबन्धः करणीयः।

**धूम्रकेतुः**—राजन्! एकमन्यन्निवेदनम्।

**महाराज**—निवेद्यतां निःशङ्कम्।

**धूम्रकेतुः**—राजन्! आचार्यमहाभागानाम् आप्रतिपदः पूर्णिमापर्यन्तं पक्षावधिकं मौनव्रतम्। अस्यामवधौ शब्दोच्चारणनिषेधः। सङ्केतैरेव वार्तालापो विधीयते। (अङ्गुल्या गणनां कृत्वा) अद्य त्रयोदशी, श्वः चतुर्दशी, परश्वश्च पूर्णिमा। तदनन्तरम् आचार्यमहाभागानां मौनव्रतपरिसमाप्तिः। परं भवतामनुमतं चेद्, राजकुमारी च यदि सहमता, शास्त्रार्थोऽयमद्यैव अधुनैव सङ्केतैः सम्पद्यते। अन्यथा प्रतीक्षणीयः समयः। परमद्यतनो

---

तो शास्त्रार्थ हो जावे। आचार्य महोदय की विजय हमारा सौभाग्य होगा। (राजकुमारी की ओर दृष्टि डाल कर) पुत्रि! तुम्हारा क्या विचार है?

(राजकुमारी लज्जा से मुख को नीचा करके स्वीकृति-सूचक सिर हिलाती है)।

**महाराज**—अमात्य! शास्त्रार्थ का प्रवन्ध करो।

**धूम्रकेतु**—राजन्! एक अन्य निवेदन है।

**महाराज**—निःशङ्क कहे।

**धूम्रकेतु**—राजन्! हमारे आचार्य जी का प्रतिपदा से लेकर पूर्णिमा तक एक पक्ष का मौन-व्रत है। इस अवधि में मुख से शब्दों का उच्चारण न करके वे केवल संकेतों से ही वार्तालाप कर रहें हैं। (अंगुलि से गणना करके) आज त्रयोदशी, कल चतुर्दशी और परसों पूर्णिमा है, उसके पश्चात् आचार्य महोदय का मौनव्रत समाप्त हो जायेगा। परन्तु आपकी अनुमति और राजकुमारी की सहमति हो, तो यह शास्त्रार्थ आज अभी ही हो जावे। अन्यथा समय की प्रतीक्षा करनी होगी

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दिवसो नक्षत्रस्थितीनां प्रवलमानुकूल्यं भजते। अतिशुभं चैतद् दिनम्। अयमेवाद्यागमनहेतुः।

महाराजः—के वयमत्र विषये निर्णेतुम्। विद्योत्तमायाः सहमतिरेव अस्माकमप्यनुमतिः। (राजकुमारीं प्रति) वत्से! कस्ते प्रस्तावः?

(राजकुमारी अवनतमुखी स्वीकृतिसूचकं शिरश्चालयति।)

महाराजः—पण्डितमहोदय! अङ्गीक्रियते राजकुमार्या भवत्प्रस्तावः। अस्माकमप्यत्रानुमतिः। (अमात्यं प्रति) अमात्य!

देवपालः—आज्ञापयतु देवः।

महाराजः—शास्त्रार्थे जयपराजयनिर्णयाय राजगुरुः कपिलाचार्यमहोदयः सादरमामन्त्रणीयः। स एव शास्त्रार्थे निर्णायकपदमलङ्करिष्यति।

देवपालः—यथाज्ञापयति देवः। (गन्तुमुद्युङ्क्ते)।

---

शुक्ल पक्ष की त्रयोदशी आज का दिन नक्षत्रों की स्थितियों की दृष्टि से अति अनुकूल है। यह दिन अति शुभ है। यही आज आने का कारण है।

महाराज—हमने इस विषय में निर्णय क्या करना है? राजकुमारी की सहमति ही अनुमति है। (राजकुमारी की ओर देखते हुये) पुत्रि! तुमको क्या कहना है?

(राजकुमारी मुख को नीचा करके स्वीकृतिसूचक सिर हिलाती है)।

महाराज—पण्डित महोदय! राजकुमारी ने आपका प्रस्ताव स्वीकार कर लिया है। हमारी भी अनुमति है। (अमात्य की ओर देखकर) अमात्य!

अमात्य—देव! आज्ञा करे!

महाराज—शास्त्रार्थ में जीत हार का निर्णय करने के लिये राजगुरु कपिलाचार्य महोदय को आप सादर आमन्त्रित करें। वे ही शास्त्रार्थ में निर्णायक होंगे।

देवपाल—महाराज का जो आदेश है। (जाने के लिये उद्यत होता है)।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**धूम्रकेतुः**—अमात्यवर ! क्षणं विरम् । राजन् ! नायं शास्त्रार्थः निर्णायकमपेक्षते । सङ्केतैरेव प्रश्नोत्तराणां प्रस्तावे राजकुमारी सङ्केतैरेव प्रश्नान् प्रक्ष्यति, आचार्यमहाभागा अपि सङ्केतान् प्रयोक्ष्यन्ते । वयमाचार्यमहाभागानां सङ्केतान् व्याख्यास्यामः । प्रश्नानामुत्तरैः राजकुमारी स्वयमेव निर्णेष्यति जयं पराजयं वा । स निर्णयः सर्वैः स्वीकरणीयः ।

**महाराजः**—पण्डितप्रवर ! समीचीनो भवतां प्रस्तावः । परमत्र पक्षद्वयस्य स्वीकृतिरनिवार्या ।(राजा क्रमशः राजकुमारीं दर्शनाचार्यं च निरीक्षते । उभावपि शिरः सञ्चालयतः) ।

**देवपालः**—देव ! इदानीं कालहरणं नोचितम् । अविलम्बमेव शास्त्रार्थस्य प्रबन्धो विधेयः ।

**महाराजः**—सम्यगेवेदम् । कारणीयः प्रबन्धः ।

---

**धूम्रकेतु**—अमात्य श्रेष्ठ ! क्षण भर के लिये रुकिये । राजन् ! इस शास्त्रार्थ में निर्णायक की आवश्यकता नहीं है । संकेतों से ही प्रश्नोत्तर होंगे । राजकुमारी के संकेतात्मक प्रश्नों का उत्तर आचार्य महाभाग संकेतों से देंगे । हम आचार्य महाभाग के संकेतों की व्याख्या करेंगे । प्रश्नों के उत्तरों से स्वयं राजकुमारी ही जीत-हार का निर्णय करेंगी वह निर्णय सबको मान्य होगा ।

**महाराज**—पण्डितश्रेष्ठ ! आपका प्रस्ताव ठीक है । परन्तु इस विषय में दोनों पक्षों की सहमति होनी चाहियें ।

(राजा क्रमशः राजकुमारी और दर्शनाचार्य की ओर देखता है । दोनों स्वीकृतिसूचक सिर हिलाते हैं ।)

**देवपाल**—देव ! समय बिताना ठीक नहीं है । शीघ्र ही शास्त्रार्थ का प्रबन्ध करना चाहियें ।

**महाराज**—यही ठीक ही । प्रबन्ध कराइये ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

देवपालः—(तारस्वरेण) द्वारपाल !

द्वारपालः—(प्रविश्य प्रणम्य) आज्ञापयन्तु श्रीमन्तः ।

देवपालः—प्रेषय द्वौ सेवकौ । शास्त्रार्था आसनानि सज्जीकरणीयानि । राजकुमार्याः सखी इला वक्तव्या—"सा सेविकया इरावत्या सह सत्वरमायातु" । वरमाला—तिलकसामग्रीइत्याद्युपस्करणमपि सहैवानेयम्" ।

द्वारपालः—(शिरोऽवनमय्य) यथा श्रीमतामादेशः (निर्गच्छति) ।

(क्षणानन्तरमेवागच्छतः द्वौ सेवकौ । दर्शनाचार्याय राजकुमार्यै च परस्पराभिमुखे पीठिके सज्जीकृत्य धूम्रकेतुगोवर्धनाभ्यामपि दर्शनाचार्यमभित आसने स्थाप्येते । सर्वे यथानिर्दिष्टान्यासनान्यलङ्कुर्वन्ति । इला स्वहस्तयोः वरमालां धारयन्ती समुपतिष्ठति । स्थाल्यां तिलकादिसामग्रीसम्भारं साधयन्ती इरावती तामनुसरति । उभे च ते राजकुमार्याः वामपार्श्वे तिष्ठतः ।)

देवपालः—आचार्यमहोदयाः !, पण्डितप्रवरौ ! राजकुमारि ! विद्योत्तमे !

---

देवपाल—(ऊंचे स्वर से) द्वारपाल !

द्वारपाल—(प्रवेश करके और प्रणाम करके) श्रीमन् ! आज्ञा दे ।

देवपाल—दो सेवको को भेजो । वे शास्त्रार्थ के लिये आसन ठीक करे । राजकुमारी की सखी इला से कहना कि वह सेविका इरावती के साथ शीघ्र आवे । वरमाला तिलक का सामान आदि सामग्रियां भी साथ में लावे ।

द्वारपाल—(सिर झुका कर) श्रीमान् का जो आदेश है (जाता है) ।

(क्षण भर बाद दो सेवक आते हैं । दर्शनाचार्य और राजकुमारी के लिये आमने-सामनें आसन लगाये जाते हैं । धूम्रकेतु और गोवर्धन के आसन दर्शनाचार्य के दोनों ओर लगाये जाते हैं । सब यथानिर्दिष्ट आसनों पर बैठते हैं । इला हाथों में वरमाला लेकर उपस्थित होती है । थाली में तिलक आदि सामग्री लेकर इरावती उसके पीछे आती है । वे दोनों राजकुमारी के वाम पार्श्व में खड़े होते हैं) ।

देवपाल—आचार्य महोदय ! और पण्डितश्रेष्ठों ! राजकुमारी विद्योत्तमे ! अब

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्प्रति शास्त्रार्थः प्रारभ्यते। आचार्यमहोदयानां मौनव्रतित्वाच्छास्त्रार्थे सङ्केतानामेव प्रयोगो विहितः। राजकुमार्याः सङ्केतप्रश्ना आचार्य-महोदयैः सङ्केतैरेवोत्तरिष्यन्ते। उभाभ्यां पण्डिताभ्यां ते व्याख्यास्यन्ते। यदि राजकुमारी तां व्याख्यां समुचितां मनुते, तर्हि सा पराजिता मन्तव्या। अन्यथा आचार्यमहोदयानां पराजयः। सम्प्रति राजकुमार्या प्रश्नः समुप-स्थानीयः।

(राजकुमारी वामेतरं करमुत्थाप्य तर्जन्याऽङ्गुल्या आचार्यं सङ्केतयति। दर्शनाचार्योऽपि दक्षिणं करमुत्थाप्य अङ्गुलित्रयेण राजकुमारीं निर्दिशति। राजकुमार्याऽवनामिते करे सोऽपि स्वकरमवनमयति। धूम्रकेतुगोवर्धनौ आचार्यस्य जयमुद्घोषयतः। राजा साश्चर्यं पश्यति)।

**महाराजः**—पण्डितप्रवरौ! कोऽभिप्रायः?

**गोवर्धनः**—(उत्थाय) राजन्! आचार्यमहाभागैः राजकुमार्याः प्रश्नं सम्यग-वधार्य समुचितमुत्तरितम्।

---

शास्त्रार्थ प्रारम्भ होता है। आचार्य महोदय का मौन व्रत होने से शास्त्रार्थ में संकेतों का ही प्रयोग होगा। राजकुमारी के संकेतों का आचार्य महोदय संकेतों से उत्तर देंगे। दोनों पण्डित उन संकेतों की व्याख्या करेंगे। यदि राजकुमारी उस व्याख्या को ठीक समझेगी तो पराजित मानी जायेंगी। अन्यथा आचार्य महोदय पराजित होंगे। अब राजकुमारी प्रश्न करें। बैठ जाता है।

(राजकुमारी दाँया हाथ उठा कर तर्जनी अंगुली से दर्शनाचार्य की ओर संकेत करती है। दर्शनाचार्य भी दाँया हाथ उठा कर राजकुमारी की ओर तीन अंगुलियों का निर्देश करता है। राजकुमारी द्वारा अपना हाथ नीचा करने पर वह भी अपना हाथ नीचा करता है। धूम्रकेतु और गोवर्धन आचार्य के जय की घोषणा करते हैं। राजा आश्चर्य से दोनों की ओर देखता है)।

**महाराज**—पण्डितश्रेष्ठो! इसका क्या अभिप्राय है?

**गोवर्धन**—(उठ कर) आचार्य महोदय ने राजकुमारी के प्रश्न को अच्छी प्रकार समझ कर उसका उत्तर दे दिया है।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**महाराजः**—तत्कथम् ?

**गोवर्धनः**—एकाङ्गुलिसङ्केतेन राजकुमार्याः प्रश्नः सृष्ट्याः कारणीभूतं मूलतत्त्वमेकमेव ब्रह्म। आचार्यमहाभागस्याङ्गुलित्रयस्याभिप्रायः—सृष्टिकारणानि त्रीणि—ईश्वरो जीवः प्रकृतिश्च। उपादानकारणं प्रकृतिः जीवानाबध्नाति बन्धने। प्रकृतिपाशे बद्धाः जीवाः विविधयोनिषु स्वकृतकर्मफलानि भुञ्जते। ईश्वरस्तेषां नियामकः। स केवलं द्रष्टा न चोपभोक्ता। सृष्टिरचनाक्रमे मूलकारणानि त्रीण्येवावगन्तव्यानि।

**महाराजः**—विद्योत्तमे ! किं ते प्रश्नस्य समुचितउत्तरम् ?

**विद्योत्तमाः**—न हि, न हि। सङ्केतेऽस्मिन् प्रश्नद्वयं निहितं वर्तते। एकस्योत्तरं तु सम्यग् वर्तते। अपरस्योत्तरमिदानीमवशिष्यते।

**धूम्रकेतुः**—(उत्थाय) राजन् ! राजकुमार्या एकस्मिन् सङ्केते प्रश्नद्वयमिव

---

**महाराज**—वह कैसे ?

**गोवर्धन**—राजकुमारी का एक अंगुली का प्रश्न था—"क्या सृष्टि की रचना के लिये मूल तत्व एक ब्रह्म ही है" ? आचार्य महोदय की तीन अंगुलियों का अभिप्राय है—"सृष्टि के कारण तीन हैं—ईश्वर, जीव और प्रकृति। उपादान प्रकृति जीवों को बन्धन में बाधती है। प्रकृति के जाल में बंधे जीव विविध योनियों में अपने किये कर्मो का फल भोगते हैं। ईश्वर उनका नियामक है। वह केवल द्रष्टा है, उपभोक्ता नहीं"। सृष्टि की रचना के क्रम में ये तीन तत्त्व ही मूल रूप में समझने चाहिये (बैठ जाता है)।

**महाराज**—राजकुमारी ! क्या तुम्हारे प्रश्नों उत्तर ठीक है ?

**विद्योत्तमा**—नहीं, नहीं। इस संकेत में दो प्रश्न निहित थे। एक का उत्तर तो ठीक है, परन्तु दूसरे का उत्तर अवशिष्ट है।

**धूम्रकेतु**—(उठकर) राजन् ! राजकुमारी के एक संकेत में दो प्रश्नों के समान आचार्य महोदय के एक संकेत में भी दो उत्तर निहित समझने चाहिये। दूसरा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आचार्यमहोभागानामपि एकस्मिन् सङ्केते उत्तरद्वयं निहितमवगन्तव्यम्।

**महाराजः**—तत्कथम् ?

**धूम्रकेतुः**—द्वितीयः प्रश्नो राजनीतिविषयकः। राज्यस्याभ्युदयाय सञ्चालनार्थं च किं नृप एवैको हेतुः? अङ्गुलित्रयस्य तात्पर्यं—नैवम्। राज्यस्याभ्युदयाय सञ्चालनार्थं च त्रयो हेतवः—नृपः, राजसेवकाः प्रजाजनाश्चेति। सर्वे सम्मिल्य राज्यमुन्नतेः शिखरमारोपयन्ति। एकस्मिन्नपि शक्तिहीने राज्यस्य पतनमवश्यभावि। (उपविशति)।

**महाराजः**—विद्योत्तमे ! किमिदं ते प्रश्नस्य समुचितमुत्तरम् ?

**विद्योत्तमा**—राजन् ! आचार्यमहाभागेन कृतं समाधानं पण्डितयोश्च व्याख्याद्वयमेतत्समुचितम्। अन्यमप्येकं प्रश्नं प्रष्टुकामा।

**महाराजः**—स्वैरं पृच्छतु तावत्। प्रश्नोऽयमेव भवतु जय-पराजयनिर्णायकः।

**राजकुमारी**—यथाऽऽज्ञापयन्ति भवन्तः।

---

प्रश्न राजनीति-विषयक हैं। राज्य की उन्नति और सञ्चालन के लिये क्या राजा ही एक मुख्य कारण है ? तीन अंगुलियों का तात्पर्य है कि ऐसा नहीं है। राज्य की उन्नति और सञ्चालन के लिये तीन हेतु हैं—राजा, राज सेवक और प्रजाजन। सब मिल कर राज्य को उन्नति के शिखर पर ले जाते हैं। एक के भी शक्तिहीन होने पर राज्य का पतन अवश्य होता है (बैठ जाता है)।

**महाराज**—राजकुमारि ! क्या तुम्हारे प्रश्न का उत्तर समुचित है ?

**विद्योत्तमा**—राजन् ! आचार्य महाभाग का समाधान और पण्डितों की व्याख्या दोनों समुचित हैं। एक और भी प्रश्न पूछना चाहती हूँ।

**महाराज**—इच्छानुसार पूछ लो। इसी में जीत-हार का निर्णय हो जावेगा।

**विद्योत्तमा**—जैसा आप आदेश देते हैं।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(राजकुमारी वामेतरं करमुत्थाप्य असंस्पृष्टमङ्गुलिपञ्चकं दर्शयति। दर्शनाचार्योऽपि दक्षिणं भुजमुर्ध्वीकृत्य प्रथममङ्गुलिपञ्चकमसस्पृष्टं तदनन्तरं मुष्टिबन्धनं दर्शयति। राजकुमार्या अवनामिते करे सोऽपि स्वभुजं नीचैः करोति। धूम्रकेतुगोवर्धनौ दर्शनाचार्यस्य जयमुद्घोषयतः। नृपश्च साश्चर्यमवलोकयति)।

**महाराजः**—पण्डितप्रवरौ ! एतस्य कोऽभिप्रायः ?

**गोवर्धनः**—राजकुमार्याः प्रश्नं सम्यगवधार्य समुचितमुत्तरं समासाधितमाचार्य-महाभागेन।

**महाराजः**—तत्कथम् ?

**गोवर्धनः**—राजन् ! राजकुमार्या अङ्गुलिपञ्चकस्यामभिप्रायः—"इयं सृष्टिः पृथिव्यप्तेजोवायुवाकाशैरिति पञ्चभिर्महाभूतैः निर्मिता। आचार्य-महाभागैः प्रथमं तु पञ्चागुलिसङ्केतेन स्वीकृतम् सत्यमेवेय सृष्टिः

---

(राजकुमारी दांया हाथ उठा कर पाँचों अंगुलियों को फैलाकर दिखाती है। दर्शनाचार्य भी दांया हाथ उठाकर पहले तो फैली पाँचों अंगुलियों को तथा बाद में मुट्ठी बांध कर दिखाता है। राजकुमारी द्वारा हाथ नीचे करने पर वह भी अपने हाथ को नीचे कर लेता है। गोवर्धन और धूम्रकेतु आचार्य की जीत की घोषणा करते हैं। राजा आश्चर्य से उनको देखता है)।

**महाराज**—पण्डितश्रेष्ठो ! इसका क्या अभिप्राय है ?

**गोवर्धन**—(उठकर) राजकुमारी के प्रश्न को ठीक-ठीक समझ कर श्रीमान् आचार्य महोदय ने ठीक उत्तर दे दिया है।

**महाराज**—वह कैसे ?

**गोवर्धन**—राजन् ! राजकुमारी का पाँच अंगुलियों से अभिप्राय था कि यह सृष्टि पृथिवी-जल-तेजः-वायु-आकाश इन पाँच महाभूतों से निर्मित है। आचार्य महाभाग ने पहले तो पाँच अंगुलियों के संकेत से स्वीकार किया कि यह सृष्टि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पञ्चभिर्महाभूतैः निर्मिता । तदनन्तरं बद्धमुष्टिकया व्यञ्जना कृतापञ्च तत्वानि संभूयैव सृष्टिरचनीं कुर्वन्ति । न च तानि पृथक्-पृथक् सृष्टि-रचनायां प्रभवन्ति । अतो जगतः सर्वे पदार्थाः न्यूनाधिकरूपेण पञ्चीकरण-सञ्जातबन्धनाः पञ्चतत्त्वात्मकाः । अयमेवआशयोऽङ्गुलिपञ्चकमुष्टि-बन्धनसङ्केतयोः । सृष्टिसर्जनायामेष एव पञ्चीकरणसिद्धान्तः । (उपविशति) ।

**महाराजः**—विद्योत्तमे ! किं ते प्रश्नस्य समुचितमुत्तरमिदम् ?

**विद्योत्तमा**—राजन् ! एषोऽपि सङ्केतः प्रश्नद्वयसूचकः ।

**धूम्रकेतुः**—(उत्थाय) राजन् ! राजकुमार्याः एकस्मिन् सङ्केते प्रश्नद्वयमिव आचार्यमहाभागानामपि एकस्मिन् सङ्केते उत्तरद्वयमवगन्तव्यम् ।

**महाराजः**—तत्कथम् ?

**धूम्रकेतुः**—द्वितीयः प्रश्नो राजनीतिविषयकः । राजकुमारी जिज्ञासति—

---

सत्य ही पांच महाभूतों से बनी है । परन्तु मुट्ठी द्वारा यह भी प्रदर्शित किया कि ये पाँचों तत्व मिलकर ही सृष्टि की रचना करते हैं । ये अलग-अलग रूप में सृष्टि का निर्माण करने में समर्थ नहीं है । अतः सृष्टि के सभी पदार्थ कम-अधिक मात्रा में पञ्चीकरण के द्वारा बध कर पञ्चतत्वात्मक होते हैं । सृष्टि की रचना में यही पञ्चीकरण सिद्धान्त है (बैठ जाता है) ।

**महाराज**—राजकुमारि ! क्या तुम्हारे प्रश्न का उत्तर समुचित है ?

**विद्योत्तमा**—राजन् ! इस संकेत में भी दो प्रश्न हैं ।

**धूम्रकेतु**—(उठकर) राजन् ! राजकुमारी के एक संकेत में दो प्रश्नों के समान आचार्य महोदय के भी एक संकेत में दो उत्तर मानने चाहिये ।

**महाराज**—वह कैसे ?

**धूम्रकेतु**—दूसरा प्रश्न राजनीति से सम्बन्धित है । राजकुमारी जानना चाहती हैं कि

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राज्य स्थैर्य रक्षायै सेनायाः कियन्त्यङ्गान्यपेक्ष्यन्ते, किं पञ्च ? धनुर्वेदादिषु शास्त्रेषु तु सेना चतुरङ्गिणी प्रमुखरूपेण निर्दिष्टा । आचार्यमहाभागैर-ङ्गुलिपञ्चकेन सूचितम्—सेनायाः पञ्चाङ्गान्येव अनिवार्याणि राज्यसुव्य-स्थितिसुस्थिरत्वरक्षणाय–हस्तिसेना, रथसेना, अश्वसेना, पदातिसेना, नौसेना च । चक्रवर्तिनृपस्य सीमानो जलनिधिभिः पावनीक्रियन्ते । अतः शास्त्रोक्तया चतुरङ्गिण्या सेनया सह सुदृढा नौसेनाऽप्यपेक्ष्यते । मुष्टिबन्धनस्य तात्पर्यम्—इमानि सेनाङ्गानि परस्पर सुसम्बद्धान्येव कार्यसाधकानि भवन्ति । एकेनैव सूत्रेण सञ्चालितेष्वेतेषु सत्स्वेव राज्यस्यसुरक्षा समुन्न-तिश्च सम्भवति । (उपविशति) ।

**महाराजः**—विद्योत्तमे ! किं त्वया स्वप्रश्नस्य समुपलब्धं समुचितमुत्तरम् ?

**विद्योत्तमा**—आचार्यमहोदयैरस्मत्प्रश्नानां समुचितं समाधानं विहितम् । अहं स्वकीयं पराजयं स्वीकरोमि ।

(राजकुमारी समन्दस्मितकटाक्षं दर्शनाचार्यमवलोक्य मुखमवनमयति) ।

---

राज्य को स्थिर रखने के लिये सेना के कितने अंगों की अपेक्षा है—चार या पाँच ? धनुर्वेद आदि शास्त्रों में मुख्य रूप से चतुरङ्गिणी सेना का उल्लेख है । आचार्य महोदय ने पाँच अंगुलियों से सूचना दी कि राज्य को सुव्यवस्थित रखने और रक्षा के लिये सेना के पाँच अंग ही आवश्यक हैं—हस्तिसेना, रथसेना, अश्वसेना, पदातिसेना और नौसेना । चक्रवर्ती राजा के राज्य की सीमायें समुद्रों से पवित्र की जाती है । शास्त्रों में कही गई चतुरङ्गिणी सेना के साथ सुदृढ़ नौसेना भी होनी चाहिये । मुट्ठी बाँधने का तात्पर्य यह है कि सेना के ये अंग आपस में सुसम्बद्ध होकर ही कार्य को सिद्ध करते हैं । इनका संचालन एक सूत्र से होने पर ही राज्य की समुचित सुरक्षा और उन्नति है । बैठ जाता है ।

**महाराज**—विद्योत्तमे ! क्या तुमने अपने प्रश्न का समुचित उत्तर पा लिया है ?

**विद्योत्तमा**—आचार्य महोदय ने हमारे प्रश्नों का समुचित समाधान कर दिया है । मैं अपनी पराजय स्वीकार करती हूँ ।

(राजकुमारी दर्शनाचार्य की ओर मन्द मुस्कराहट के साथ कटाक्ष डालती है और मुख को झुका लेती है) ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**धूम्रकेतुगोवर्धनौः**—(उत्थाय) विजयतामाचार्यमहाभागाः । विजयतां राजकुमारी विद्योत्तमा । विजयतां महाराजः सुदर्शनः । (उपविशतः) ।

**महाराजः**—शुभोऽद्यतनो दिवसः । राजकुमार्याः प्रतिज्ञा सम्पूर्णा । वत्सया स्वगुणानुरूपो विद्यासौन्दर्यसम्पन्नो जीवनसहचरोऽधिगतः । विधात्रा द्वे युवहृदये एकसूत्रे संयोज्य चिरवाच्यताऽपसारिता । श्रीदर्शनाचार्यमहोदयदर्शनेन परमसौभाग्यशालिनो वयम् । सर्वशास्त्रपारङ्गतास्ते व्यावहारिकराजनीतावपि निष्णाताः । दुहितृभर्तृत्वेन सहैव तेऽस्माकं योग्या उत्तराधिकारिणः । (राजकुमारीमवलोक्य) वत्से ! आचार्यमहाभागेन स्वगुणैस्त्वं समुपलब्धा । वरमालया यथाविधि वरणीया इमे । ततश्च ससमारोहं संस्कारो विधीयते ।

(नेपथ्ये वाद्यसङ्गीतध्वनिः । पार्श्वस्थिताया इलायाः करसन्निहितां वरमालां स्वकराङ्गुलिप्रणयिनीं विधाय राजकुमारी शनैः-शनै-रग्रतः प्रसरन्ती

---

**धूम्रकेतु और गोवर्धन**—(उठ कर) आचार्य महोदय की जय हो । राजकुमारी विद्योत्तमा की जय हो । महाराज सुदर्शन की जय हो । (बैठ जाते हैं) ।

**महाराज**—आज का दिन शुभ है । आज राजकुमारी की प्रतिज्ञा पूरी हो गई है । पुत्री ने अपने गुणों के अनुरूप विद्वान् और सुन्दर जीवन-सहचर को पा लिया है । विधाता ने समान गुण-स्वभाव वाले दो युवक-हृदयों को एक सूत्र में बांध कर अपनी चिरकालीन निन्दा दूर कर दी है । श्रीमान् दर्शनाचार्य के दर्शनों से हम परम सौभाग्यशाली हैं । वे सब शास्त्रों में पारङ्गत है और व्यावहारिक राजनीति में निष्णात हैं । वे हमारे दामाद और योग्य उत्तराधिकारी हैं राजकुमारी को देखकर वत्से आचार्य महोदय ने अपने गुणों से तुमको प्राप्त किया है । वरमाला पहना कर तुम उनका विधिपूर्वक वरण करो । तदनन्तर, समारोह के साथ विवाह संस्कार होगा ।

(नेपथ्य में वाद्य-संगीत की ध्वनि होती है । पार्श्व में खड़ी इला के हाथ में पकड़ी वरमाला को अपनी अंगुलियों में पकड़ कर राजकुमारी धीरे-धीरे आगे जाकर दर्शनाचार्य के समीप पहुँच कर वरमाला को ऊपर उठाती है और

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दर्शनाचार्यमुपगम्य वरमालामुन्नमय्य तस्यावनामितं कण्ठं विभूषयति। महाराजः सुदर्शनोऽपि सिंहासनादवरुह्य इरावतीतस्तिलकसम्भारसंपूर्णं पात्रमादाय दर्शनाचार्यस्य भालं तिलकेन विभूषयति। धूम्रकेतुगोवर्धनौ पुनरपि जयकारानुद्घोषयतः)।

(यवनिका पतति)

इति द्वितीयोऽङ्कः।

---

दर्शनाचार्य की झुकी हुई ग्रीवा में पहना देती है। इसके बाद महाराज सुदर्शन सिंहासन से नीचे उतर कर इरावती से तिलक की सामग्री के पात्र को लेकर दर्शनाचार्य के माथे को तिलक से विभूषित करते हैं। धूम्रकेतु और गोवर्धन पुनः जयकारों की घोषणा करते हैं)।

(यवनिका गिरती है)

दूसरा अङ्क समाप्त हुआ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## तृतीयोऽङ्कः

(राजप्रासादस्य कुमार्यन्तःपुरे विद्योत्तमायाः कक्षम् । निशायाः प्रथमः प्रहरः । दीपानां मन्दालोके ज्वलतां धूपवर्तिनां सौरभं परितः प्रसरति । कक्षमध्ये रमणीये पर्यङ्के विविधवर्णविकसितसुरभितकुसुमपटलानि विकीर्णानि । गवाक्षमार्गात् संलक्ष्यमाणस्य वियति द्योतमानस्य राका-चन्द्रस्य रश्मयः प्रविशन्ति । नववधूवेशे शोभनतमैः हीरकमौक्तिकमरकता-दिरत्नजटितस्वर्णविभूषणैः विविधैः प्रसाधनैः कौशेयक्षौमवसनैश्च सम-लङ्कृता राजकुमारी विद्योत्तमा उपगवाक्षं शशिशोभावलोकनपरा वर्तते) ।

**विद्योत्तमा**—अहो ! अद्य सफलीभूतं मे जीवनम् । चिरसञ्चिताः हृदया-काङ्क्षाः भगवत्या सरस्वत्या सम्पादिताः । नारीत्वं सार्थकं जातं लक्ष्यं चाधिगतम् । नास्ति मत्समा सुभगा रमणी जगत्यस्मिन् या एतादृशेन

---

## तृतीय अङ्क

(राजप्रसाद के कुमारी–अन्तःपुर में विद्योत्तमा का शयन-कक्ष । रात्रि का पहला प्रहर है । दीपकों का मन्द प्रकाश है । जलते धूपों की सुरभि चारों ओर फैल रही है । कक्ष के मध्य में सुन्दर पलंग पर अनेक रंग के खिले पुष्पों की पंखुड़ियाँ बिखरी हैं । खिड़की के मार्ग से आकाश में दिखाई देते हुये पूर्णिमा के चमकते चन्द्र की किरणें कक्ष में आ रही हैं । नववधू के वेश में सुन्दरतम हीरे-मोती-मरकत आदि रत्नों से जड़े स्वर्ण-आभूषणों, विविध प्रसाधनों और रेशमी वस्त्रों से सजी राजकुमारी विद्योत्तमा खिड़की के समीप खड़ी होकर चन्द्रमा की शोभा का अवलोकन करती, दृष्टिगोचर होती है) ।

**विद्योत्तमा**—अहो, आज मेरा जीवन सफल हो गया है । मेरे हृदय की चिरसञ्चित आकाङ्क्षायें भगवती सरस्वती ने पूरी कर दी हैं । नारीत्व की सार्थकता होकर लक्ष्य प्राप्त हो गया है । मेरे समान सौभाग्यशाली इस जगत् में कोई नहीं है,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विदुषा सुरूपेण राजनीतिनिष्णातेन च बल्लभेन संगता। (हृदये करं निधाय) हृदय! अलमुत्ताम्य। अचिरेणैवागन्तव्यं तैः। अहो! प्रतीक्षाक्षणाः कियतीं मादकतामावहन्ति। महत्या पीडया सहैवालौकिक-मञ्जुमाधुर्यं हृदयरञ्जनमप्यत्र संभृतं भवति। प्रत्यङ्गं परिस्फुरतीव। रोमोद्गम इव...। (द्वारं प्रति गत्वा निवृत्य च) न जाने, कथमिव बिलम्ब्यते तैः? हृदय! स्वल्पमिव शान्तं भव। ईषत्तु धैर्यं धारय।

(द्वारदेशे खटखटेति ध्वनिः)।

**विद्योत्तमा**—अहो! समायातास्ते इति तर्कयामि। इला तानानयत्येव। (हृदये करं निधाय) हा किमहं करवाणि साम्प्रतम्? हन्त! कथमिव... ? अहो तैः साकं कथमिव स्थास्यामि? किमालपिष्यामि?

(द्वारदेशे पुनरपि खटखटेति ध्वनिः)।

**विद्योत्तमा**—(तारस्वरेण) कः? को वा? अन्तः आगच्छ।

---

जिसने ऐसा विद्वान्, राजनीति-निपुण और सुन्दर पति प्राया हो। (हृदय पर हाथ रखकर) अरे हृदय! उतावला मत हो। शीघ्र ही वे आ रहे हैं। अहो, प्रतीक्षा के क्षणों की मादकता। महती पीड़ा के साथ अलौकिक माधुर्य और हृदय की प्रसन्नता। प्रत्येक अंग फड़क सा रहा है। रोमाञ्च सा...। (द्वार के समीप जाकर और लौट कर) न जाने, उनको विलम्ब क्यों हो रहा है। हृदय! थोड़ा सा तो शान्त हो जा। कुछ तो धैर्य रख ले।

(दरवाजे पर खट-खट ध्वनि होती है)।

**विद्योत्तमा**—अहो! मैं समझती हूँ कि वे आ गये हैं। इला उनको लेकर आती ही होगी। (हृदय पर हाथ रखकर) हाय, अब मैं क्या करूँ? हाय, किस प्रकार...। अहो, उनके साथ कैसे रहूँगी, क्या बात करूँगी?

(दरवाज़े पर पुनः खट-खट ध्वनि होती है)।

**विद्योत्तमा**—(उच्च स्वर से) कौन है, कौन है? अन्दर आ जाओ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इला**—(द्वारस्य बहिः प्रदेशादेव) इयहमस्मि, इला ।

**विद्योत्तमा**—इले ! न द्वारमभ्यन्तरेण अर्गलितम् । आयाहि, आयाहि ।

(द्वारमनावृतं भवति । इला अन्तः प्रविशति । साऽपि नवश्रृङ्गारसुसज्जिता वर्तते) ।

**इला**—(राजकुमार्याः समक्षं शिरोऽवनतं कृत्वा करौ च मुकुलीकृत्य प्रणम्य) राजकुमारि !

**विद्योत्तमा**—सखि !

**इला**—आज्ञापयतु राजकुमारि !

**विद्योत्तमा**—अस्ति कश्चित् समाचारः ?

**इला**– राजकुमारि ! आचार्यमहाभागाः किञ्चित्क्षणानन्तरमेवात्रागन्तारः । राजप्रासादस्य परिहासव्यसनिनीभिः युवतीभिः परिचारिकाभिः... ।

---

**इला**—(दरवाजे के बाहर से) यह मैं हूँ, इला ।

**विद्योत्तमा**—इले ! दरवाजा अन्दर से बन्द नहीं है । आओ, आ जाओ ।

(दरवाजा खुलता है । इला अन्दर प्रवेश करती है । वह भी नये शृङ्गार से सजी है) ।

**इला**—(राजकुमारी के समक्ष सिर झुका कर, हाथ जोड़ कर और प्रणाम करके) राजकुमारि !

**विद्योत्तमा**—सखि इले !

**इला**—राजकुमारी आदेश करें ।

**विद्योत्तमा**—कोई समाचार ?

**इला**—राजकुमारि ! आचार्य महोदय कुछ क्षणों के पश्चात् यहाँ आते ही होंगे । राजप्रासाद की परिहासप्रिय युवती दासियों ने... ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—(ससम्भ्रमम्) राजप्रासादस्य परिचारिकाभिः किम् ?

**इला**—(सस्मितम्) न भेतव्यं राजकुमारि ! ताभिर्न किमपि अन्यथा आचरितम् । तास्तु आचार्यमहोदयान् परित आवृत्य स्थिताः । परिहासपेशलाभिस्ताभिः विविधं परिहसितम् । परन्तु आचार्यमहोदयास्तु... ।

**विद्योत्तमा**—किमाचरितमाचार्यमहोदयैः ?

**इला**—परमाचार्यमहोदयानां वदनात्त्वेकस्यापि शब्दस्य बहिर्निर्गतिर्न बभूव । (विविधाभिश्चेष्टाभिः हसन्ती) परन्त्वनेकभङ्गिभङ्गैरेवमेवं शिरोचालनं, हस्तसंचालनं, भूमौ चरणताडनं, मुखविकृत्यादिकं च प्रदर्शयन्तः स्थितास्ते । सर्वा एव परिचारिकास्तेषामेवंविधाश्चेष्टाः दर्शं दर्शं हास्योन्मत्ताः जाताः ।

**विद्योत्तमा**—इले ! न ते स्वमुखादुच्चारयिष्यन्ति कानिचिदपि पीयूषाक्षराणीदानीन्तने काले ।

---

**विद्योत्तमा**—(घबराहट से) राजप्रासाद की दासियों ने क्या... ?

**इला**—(मुस्करा कर) राजकुमारि ! डरें नहीं । उन्होंने कुछ भी नहीं किया । उन्होंने तो आचार्य को चारों ओर से घेर लिया । परिहास करने में चतुर उन्होंने अनेक परिहास किये । परन्तु आचार्य महोदय तो... ।

**विद्योत्तमा**—आचार्य महोदय ने क्या किया ?

**इला**—परन्तु आचार्य महोदय के मुख से एक शब्द भी नहीं निकला । (विविध चेष्टायें करके हँसते हुये) परन्तु अनेक प्रकार से अंग-संचालन करके, इस प्रकार सिर चला कर, हाथों को नचा कर, भूमि पर पैर पटक कर और मुख को मटका कर अनेक प्रकार की चेष्टायें दिखाते रहे । उनकी इन चेष्टाओं को देख-देखकर सभी दासियाँ हँसी से दोहरी हो गई हैं ।

**विद्योत्तमा**—इले ! वे इस समय अपने मुख से कोई भी अमृतरूपी अक्षर नहीं निकालेंगे ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इला—किं ते वाग्विरहिताः ?

विद्योत्तमा—न हि, न हि; मौनव्रतं तेषाम् । अवधिस्तु पूर्णिमाया अर्धरात्रिः । निशीथे परिसमाप्यते तद् व्रतम् । प्रहरस्यांशमात्रेमेवावशिष्टम् । तदनन्तरं तेषां मधुरा वाक् तव श्रोत्रे पीयूषसममधुररसाप्लुते करिष्यत्येव ।

इला—मम श्रोत्रे भवतीनां वा ?

विद्योत्तमा—(इलायाः कपोले मधुरमन्दं चपेटं दत्वा) गच्छ, अपसर । धूर्तेवासि त्वम् ।

इला—राजकुमारि ! अपि मुदिता भवती ?

विद्योत्तमा—(इलामाकृष्य स्वभुजयोराबध्य तस्य कपोलं च परिचुम्ब्य स्वीकृति-सूचकं सुस्मितं मुखं परिचाल्य) आमेवम् ।

---

इला—क्या वे गूँगे हैं ।

विद्योत्तमा—नहीं-नहीं । उनका मौन व्रत है । अवधि पूर्णिमा की आधी रात है । यह व्रत आधी रात में समाप्त होगा । प्रहर का केवल अंश मात्र अवशिष्ट रह गया है । इसके बाद उनकी मधुर वाणी तुम्हारे कानों को अमृत के समान मधुर रस से आप्लावित कर देगी ।

इला—मेरे कानों को अथवा आपके ?

विद्योत्तमा—(इला के गाल पर मीठी हल्की चपत लगा कर) जा हट । तू धूर्त ही है ।

इला—राजकुमारि ! क्या आप प्रसन्न हैं ?

विद्योत्तमा—(इला को खींच कर अपनी भुजाओं में बाँध कर और गाल पर चुम्बन करके स्वीकृति-सूचक मुस्कराते मुख को हिला कर) हाँ हाँ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इला—(पृथक् स्थित्वा) राजकुमारि ! समुपस्थितेष्वत्र तत्रभवत्सु आचार्य-पादेषु किमाचरिष्यति भवती ?

विद्योत्तमा—(इलायाः पृष्ठं हस्तेन प्रहृत्य) न त्यक्ष्यसि किं स्वकीयां चापल्य-धूर्तताम् ?

इला—(हसित्वा पृष्ठं परामृशन्ती) इयान् प्रबलो प्रहारस्तु आचार्यमहोदयैरपि न क्षम्यते सोढुम् ।

विद्योत्तमा—(हसन्ती इलायाः वेणीमाकृष्य) दुष्टे ! किं त्वं स्वकीयां दुष्टतां न त्यक्ष्यसि ? गच्छ, अपसर दूरमितः । (द्वारं प्रति तामपसारयति) ।

इला—(गभीरभावं कृत्वा) आदरणीये राजकुमारि ! यदि प्रियतमं प्रतीक्षमाणा भवती मामुपस्थितां विघ्नकारिणीं गणयति, तर्हि गन्तु-कामाऽहम् ।

(राजकुमारीं तिर्यग् विलोकयन्ती बहिर्गन्तुमुद्यता इला द्वारमुपसरति) ।

---

इला—(अलग खड़ी होकर) राजकुमारि ! आदरणीय आचार्य महोदय के यहाँ उपस्थित होने पर आप क्या करेंगी ?

विद्योत्तमा—(इला की पीठ पर हाथ से प्रहार करके) क्या तू अपनी चपलता और धूर्तता को नहीं छोड़ेगी ?

इला—(हँस कर पीठ को सहलाते हुये) इतने प्रबल प्रहार को तो आचार्य महोदय भी सहन नहीं कर सकेंगे ।

विद्योत्तमा—(हँसते हुये इला की चोटी खेंच कर) दुष्टे ! क्या तू अपनी दुष्टता को नहीं छोड़ेगी ? जा यहाँ से दूर हट (उसको द्वार की ओर ढकेलती है) ।

इला—(गम्भीर होकर) आदरणीय राजकुमारि ! यदि प्रियतम की प्रतीक्षा करते हुये आप मेरी उपस्थिति को विघ्न करने वाली समझती हैं, तो मैं जाती हूँ ।

(राजकुमारी की ओर तिरछी दृष्टि से देखती हुई इला द्वार की ओर बढ़ती है) ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—(अग्रे प्रसृत्य इलायाः कराववलम्ब्य) सखि इले ! अपि रुष्टा ? अहं तु परिहसन्त्यासम् । किमहं त्वां बहिर्गमनाय कथयितुं पारयामि ?

**इला**—(राजकुमार्याः चरणौ संस्पृश्य) किं कदाचिद् भवत्यै रोषः सम्भवः ? सहोदरा भगिनीव, न हि, न हि, ततोऽप्यधिकं स्नेहो मयि भवत्याः । भवत्याश्चरणयोः दासीभाव एव मे परमं सौभाग्यम् । मद्रुधिरस्य बिन्दुरपि वपुषोऽणुरपि च सर्वस्वमेव भवत्याश्चरणयोरेवार्पितम् । छायेवाऽहं भवदनुवर्तिनी ।

**विद्योत्तमा**—(इलां भुजयोराबध्य) प्रिय सखि ! किमिदं त्वया भण्यते ? त्वं मे प्रियतमा सखी । त्वं मे प्राणाः, जीवनं चावलम्बनम् । ज्योत्स्नेव राकायाः । पितृचरणैः निर्मोचितां त्वां...।

**इला**—राजकुमारि ! न स्मारणीयास्ताः घटनाः । तास्तु...।

---

**विद्योत्तमा**—(आगे बढ़ कर और इला का हाथ पकड़कर) सखि इले ! क्या तू रूठ गई । मैं तो हँसी कर रही थी । क्या मैं तुझको बाहर जाने के लिये कह सकती हूँ ।

**इला**—(राजकुमारी के पैर छू कर) राजकुमारि ! क्या मैं आपसे कभी रुष्ट हो सकती हूँ ? आपका मेरे प्रति सगी बहन के समान, नहीं नहीं, उससे भी अधिक स्नेह है । आपके चरणों की दासी होना ही मेरा परम सौभाग्य है । मेरे रक्त की एक-एक बूंद और मेरे शरीर का एक-एक अणु और सर्वस्व आपके चरणों में अर्पित है ! मैं छाया के समान आपकी अनुवर्तिनी हूँ ।

**विद्योत्तमा**—(इला को भुजाओं में बांध कर) प्रिय सखि ! यह तुम क्या कहती हो । तुम मेरी सबसे प्रिय सखी हो । तुम मेरी प्राण हो और जीवन का सहारा हो, जैसे कि पूर्णिमा की ज्योत्स्ना होती है । पिताजी ने तुमको जब से शत्रुओं से मुक्त कराया...।

**इला**—राजकुमारि ! उन घटनाओं की याद मत दिलाइये । वे तो...।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—ते रक्ताननाः यवनाः...। ओह, निष्ठुरक्रूर-नृशंस-निर्दय-निष्करुण-निघृ'ण-परपीडन-नीच-घोर-रौद्र-कुत्सितकर्मणां पराकाष्ठाः। परिकल्पनाश्चापि न सम्भाव्यन्ते यन्मानवशरीरधारिषु इयत्क्रौर्यकार्कश्यम् ?

**इला**—आम् राजकुमारि ! ते दुर्दान्ताः रक्ताननाः शकाः अस्मद् विदर्भराज्यमाक्रम्य नागरिकाणां निर्दयमनिर्बन्धं वधमारभन्त दानवाः। कपटाचरणैरेव ते देशद्रोहिनिर्दिष्टमार्गाः राजधानीं दानवाः अमरावतीमिव निर्मथ्योन्मथ्य राजप्रासादमपि प्राविशन्। मत्समक्षमेव पितुः शरीरं खण्डशः कृतं तैः। ततश्च द्वौ भीमकायौ शकौ मम मातरं परिबध्य तस्याः वस्त्राणामाकर्षणं प्रारभेताम्। तदनन्तरं तदनन्तरम्...।

(हस्ताभ्यां मुखमावृत्य सगद्गदं रोदिति)।

**विद्योत्तमा**—अलमलमालि ! बहु भणितेन। विस्मर्तव्यास्तु ता वार्ताः।

**इला**—कथं सम्भवति तत् ? कतिपयक्षणानन्तरं च तैः क्रूरैराततायिभिर्यवन-

---

**विद्योत्तमा**—वे लाल मुखों वाले यवन...। ओह, निष्ठुर, नृशंस, निष्करुण, निर्दय, परपीडन, नीच, घोर, रौद्र, कुत्सित, क्रूर और निर्दय कर्मों की पराकाष्ठायें। मनुष्य का शरीर धारण करने वालों में इतनी क्रूरता की कल्पना भी सम्भव नहीं है।

**इला**—हाँ राजकुमारि ! वे दुर्दान्त लाल मुखों वाले शक। हमारे विदर्भ राज्य पर आक्रमण करके उन्होंने नागरिकों का निर्मम और सतत वध आरम्भ कर दिया। छल करके तथा देशद्रोहियों से मार्ग जान कर उन्होंने राजधानी को उसी प्रकार मथ डाला, जैसे दानवों ने अमरावती को मथा था। तदनन्तर वे राजप्रसाद में भी प्रविष्ट हो गये। मेरे सामने ही उन्होंने मेरे पिता के शरीर के टुकड़े-टुकड़े कर दिये। उसके पश्चात् दो भीमकाय शकों ने मेरी माता को बाँध कर उसके वस्त्रों को खींचना आरम्भ कर दिया। उसके बाद...उसके बाद...।

(दोनों हाथों से मुख को ढ़क कर गद्गद स्वर में रोती है)।

**विद्योत्तमा**—सखि ! बस करो। अधिक वर्णन मत करो। उन बातों को भूल जाओ।

**इला**—यह कैसे सम्भव है ? कुछ क्षणों के बाद उन आततायी क्रूर यवन शकों ने

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शकैः मम मातुरपि वपुः खण्डशो विहितम् । तदानीमहं तत्रैव भयाद् वेपमानाङ्गयष्टिः स्थितवती । सहसैको भयावहमुखाकृतिर्यवनो शोणारुणवपुः मम भुजं सुदृढं परिगृह्य प्रसह्य मामाकर्षन् बहिर्गन्तुमचेष्टत ।

**विद्योत्तमा**—तस्मिन्नेव समयेऽस्माकं पितृचरणाः ससैन्यं तत्र सम्प्राप्ताः ।

**इला**—मम पित्रा यशोधर्मणा शकानामाक्रमणमनुमितं प्रथमत एव । स सम्राजो विक्रमादित्यस्य भवतश्च पितुः सेवायां सहायतायै प्रैषयच्चारान् । तदानीं सम्राड् विक्रमादित्यस्तु हिमगिरेः पश्चिमसीमान्तप्रदेशेषु शकैः सह युद्धे व्यापृत आसीत् । भवत्याः पितृचरणा अस्माकं सहायतायै समागताः, परम्... ।

**विद्योत्तमा**—परं तेषामागमनं तत्र किञ्चिद् विलम्बितम् । अथ च यदि ते तत्र कतिपयक्षणपूर्वमेव समागमिष्यन्, तर्हि... ।

**इला**—अद्य मम पितरावपि जीवितौ अभविष्यताम् । अथ च... ।

---

माता के शरीर के भी टुकड़े-टुकड़े कर दिये । उस समय मैं वहीं खड़ी थी और मेरा शरीर भय से काँप रहा था । सहसा एक भयानक मुखाकृति तथा खून से लाल शरीर वाले शक ने मेरी भुजा को मजबूती से पकड़ कर मुझको बलपूर्वक खींचना आरम्भ कर दिया और बाहर ले जाने की चेष्टा की ।

**विद्योत्तमा**—उसी समय हमारे पिताजी सैनिकों के साथ वहाँ पहुँच गये ।

**इला**—मेरे पिता यशोधर्मा ने शकों के आक्रमण पूरा अनुमान पहले ही कर लिया था । उन्होंने सम्राट् विक्रमादित्य और आपके पिताजी की सेवा में सहायता के लिये दूतों को भेजा था । उस समय सम्राट् विक्रमादित्य हिमालय पर्वत के पश्चिमी सीमान्त प्रदेशों में शकों के साथ युद्ध में लगे हुये थे । आपके पिताजी हमारी सहायता के लिये पहुँचे तो, परन्तु...।

**विद्योत्तमा**—परन्तु उनका पहुँचना कुछ विलम्ब से हुआ । यदि वे कुछ ही क्षण पहले पहुँच जाते तो...।

**इला**—आज मेरे माता-पिता जीवित होते । और...।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—अथ च मम सखी इला तेषां विदर्भराजप्रासादानां स्वामिनी अभविष्यत्। कञ्चित् शक्तिशालिनं राजकुमारं स्वभुजाभ्यामाबध्य जीवितमात्मनः सार्थकम्... ।

**इला**—राजकुमारि ! अलमेतेन प्रसङ्गेन। अत्र मया भवत्संविधौ वात्सल्य-भावेन सकलभौतिकसुखान्यनुभूयन्ते। सर्वगुणसम्पन्ना राजकुमारी मामात्मनोऽभिन्नत्वेन गणयति। दश वर्षाणि व्यतीतानि। मया स्वप्रियसख्याः स्नेहमय्यां छायायामत्यधिकं सुखमनुभूयते।

**विद्योत्तमा**—महत्सुखमनुभूयते ? इले ! न जानासि त्वं पित्रोः स्नेहिलच्छत्र-छायायाः महत्सौभाग्यम्। सुखविश्रान्तिदायिनी सा।

**इला**—जानामि किन्न ? यदा तु क्रूरशकैः मम पितरौ नामशेषौ कृतौ, तदाऽहं दशवर्षीया एव त्वासम्। जानाम्यहं पित्रोः वात्सल्यम्। स्वकीयाया एकलायाः सन्ततेर्मम प्रत्येकमभिलाषं तावुत्पत्तिसमकालमेव प्रापूरयताम्।

---

**विद्योत्तमा**—और मेरी प्रिय सखी इला विदर्भ के राजप्रसादों की स्वामिनी होती। किसी शक्तिशाली राजकुमार को अपनी भुजाओं में बाँध कर जीवन की सार्थकता को...।

**इला**—राजकुमारि ! इस प्रसङ्ग को यहीं समाप्त कीजिये। आपके स्नेह को पाकर मैंने सारे सांसारिक सुख पाये हैं। सर्वगुणसम्पन्न राजकुमारी मुझको अपने से अभिन्न मानती हैं। दस वर्ष व्यतीत हो गये, मैं अपनी प्रिय सखी की स्नेहमयी छाया में अत्यधिक सुख का अनुभव करती हूँ।

**विद्योत्तमा**—क्या बहुत सुख का अनुभव कर रही हो। इले ! तुम माता-पिता की स्नेहमयी छत्र-छाया को नहीं जानतीं। वह सुख-विश्रान्ति देने वाली है।

**इला**—जानती क्यों नहीं ? जब क्रूर शकों ने मेरे माता-पिता को मार डाला था, तब मैं दस वर्ष की ही तो थी। मैं माता-पिता के वात्सल्य-स्नेह को जानती हूँ। अपनी एकमात्र सन्तान मेरी प्रत्येक अभिलाषा को उत्पन्न होने के साथ ही वे पूरा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परं यदा क्रूरैः शकैः...राजकुमारि ! तद्भयावहं दारुणं दृश्यं सदैव मे चक्षुषोः सम्मुखं नृत्यदिव प्रतीयते ।

(कराभ्यां मुखमावृत्य सगद्गदं रोदिति) ।

**विद्योत्तमा**—अलं रुदितेन, सखि ! रुदितेनालम् ।

(इलामालिङ्ग्य कपोलौ परामृशन्ती)

सखि ! विस्मर तासां वार्तानाम् । प्रत्यासन्ना आचार्यमहोदयानामागमनवेला ।

**इला**—(राजकुमार्याः पृथग्भूय चक्षुषी प्रमृज्य बलात् स्मितमभिनीय) राजकुमारि ! क्षम्यताम् । न हि शुभेऽस्मिन्नवसरे रोदनस्यौचित्यम् । दुर्लक्षणमेवैतत् । अवसरोऽयं तु प्रमोदस्य, गानस्य, हसनस्य च । (हसनमभिनीय चन्द्रमभिलक्ष्य) पश्य, चन्द्रोऽयं चन्द्रिकामलिङ्गन् स्मयते । मोदमावहन्ती चन्द्रिकाऽपि भावविह्वला नात्मानं धारयितुं प्रभवति । सर्व-

---

कर देते थे । परन्तु जब क्रूर शकों ने...। राजकुमारि ! वह भयानक दृश्य सदा ही मेरी आँखों के सामने नाचता सा प्रतीत होता है ।

(हाथों से मुख को ढ़क कर गद्गद स्वर में रोती है) ।

**विद्योत्तमा**—मत रो सखि ! मत रो । (इला का आलिङ्गन करके गालों को सहला कर) सखि ! इन बातों को भूल जाओ । आचार्य महोदय के आने का समय समीप है ।

**इला**—(राजकुमारी से अलग होकर आँखों को पोंछ कर प्रयत्न से मुस्कराती हुई) राजकुमारि ! क्षमा करो । इस शुभ अवसर पर रोना उचित नहीं है । यह बुरा लक्षण है । यह तो मौज करने का, हँसने का और गाने का अवसर है । (हँसने का अभिनय करके चन्द्रमा की ओर संकेत करके) देखो ! यह चन्द्रमा चांदनी का आलिङ्गन करके मुस्करा रहा है । प्रसन्न भावविह्वल चान्दनी भी अपने को सम्भाल नहीं पा रही । यह सारे विश्व को दिव्य आलोक से भरती

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मेव जगद् दिव्यालोकेनापूरयन्ती सा अलौकिकोन्मादवशंवदं विदधाति। वरम्, गच्छाम्यहमिदानीम्। आचार्यमहोदयानामागमनसमयः संवृत्त एव। भवती...। (गमनाय पदमुद्वहति)।

**विद्योत्तमा**—(इलां भुजेन परिगृह्य) प्रिय सखि! न गन्तव्यम् न गन्तव्यम्। त्वं छायेव सदैव मया साकमध्यवात्सीः। आदशवर्षमस्माकं भोजनं, पानं, शयनं जागरणं, क्रीडनं, कूर्दनम्, अध्ययनमित्यादिकं सर्वं सहैव सम्पद्यमानं वर्तते। इदानीं मामेकाकिनीं परित्यज्य कथमिव गन्तुं प्रभवसि?

**इला**—राजकुमारि! किमिव त्वमेकाकिनी? इदानीं तु भवत्यै न मे स्वल्पाऽप्यपेक्षा। ममात्रावस्थानमपि भवत्यै...।

(द्वारप्रदेशे खटखटेति ध्वनिना सह युवतीनामट्टहासस्वराः श्रूयन्ते)।

**इला**—प्रतीयते दासीजनैराचार्यमहोदय आकृष्य राजकुमार्याः सविधमानीयते। तदहं स्वयमेव बहिर्गत्वा तस्य स्वागतं करवाणि।

---

हुई अलौकिक उन्माद के आधीन कर रही है। अच्छा, अब मैं जाती हूँ। आचार्य महोदय के आने का समय हो गया है। आप... (जाने के लिये कदम उठाती है)।

**विद्योत्तमा**—(इला को भुजा से पकड़ कर) प्रिय सखि! न जाओ, न जाओ। तुम सदा ही छाया के समान मेरे साथ रहती रही हो। दस वर्षों से हमारा भोजन; पान, सोना, जागना, खेलना, कूदना, अध्ययन आदि सब साथ हीं हुआ है। अब मुझको अकेली छोड़ कर तुम कैसे जा सकती हो?

**इला**—राजकुमारि! क्या आप अकेली हैं? अब तो आपको मेरी जरा सी भी अपेक्षा नहीं है। अपितु मेरा यहाँ रहना आपके लिये...।

(दरवाजे पर खट-खट की ध्वनि के साथ युवतियों के अट्टहास सुनाई देते हैं)।

**इला**—प्रतीत होता है कि दासियाँ आचार्य महोदय को खींच कर राजकुमारी के पास ला रही हैं। अब मैं बाहर जाकर उनको साथ ही ले आती हूँ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(राजकुमार्याः स्वहस्तमुन्मोच्य बहिर्गच्छति)।

**विद्योत्तमा**—(गवाक्षं निकषा गत्वा) अहो ! समागतास्ते। किमहं करवाणि साम्प्रतम् ?

**नेपथ्ये दास्यः**—अहो, इलैव खलु बहिरायाता। इले ! कुत्रास्ते प्रियसखी स्वामिनी। नय तस्याः मूकं बधिरं प्रियतमं तदन्तिकमेव। व्यथयत्येनम् विरहव्यथा, वपु र्मनश्च व्याप्नोति।

(कतिपयक्षणपर्यन्तं युवतीनां हास्यध्वनयः श्रूयन्ते। वरवेशे सुसज्जितं दर्शनाचार्यमानीय कक्षमिला प्रविशति। दर्शनाचार्यो भीत इव परितो विलोकयन् पर्यङ्कं निकषा निश्चलनिस्पन्दस्तिष्ठति। इला विद्योत्तमा-मुपसर्पति)।

**इला**—राजकुमारि ! भवत्याः प्रियतममहोदयाः आचार्याः भवत्सेवायां समुपस्थिताः।

---

(राजकुमारी से अपनी भुजा छुड़ा कर बाहर चली जाती है)।

**विद्योत्तमा**—(खिड़की के समीप जाकर) अहो ! वे आ गये हैं। मैं क्या करूं ?

**नेपथ्य में दासियाँ**—अहो ! इला ही बाहर आ गई। इले ! तुम्हारी स्वामिनी सखी कहाँ हैं ? उनके गूँगे प्रियतम को उनके पास ही पहुँचा दो। विरह की व्यथा इनको पीडित कर रही है, तथा शरीर और मन में व्याप्त हो रही है।

(कुछ क्षणों तक युवतियों की हँसियाँ सुनाई देती हैं। वर के वेश में सजे हुये दर्शनाचार्य को लेकर इला कक्ष में प्रवेश करती है। डरा हुआ सा दर्शनाचार्य चारों ओर देखता है। वह पलंग के पास जाकर निश्चल खड़ा हो जाता है। इला विद्योत्तमा के समीप जाती है)।

**इला**—राजकुमारी ! आपके प्रियतम आचार्य महोदय आपकी सेवा में उपस्थित हो गये हैं।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(राजकुमारी किमप्यनुक्त्वा गवाक्षमार्गेण शशिन एव अवलोकनेरता वर्तते)।

इला—(राजकुमार्याः स्कन्धे करं निधाय) राजकुमारि ! समुपस्थिताः भवदीयाः प्रियाः प्राणेशाः। (राजकुमार्याः मुखं दर्शनाचार्यं प्रति उन्नमयन्ती) सम्प्रति गमनाय मामनुमन्यताम्।

विद्योत्तमा—(इलां भुजाभ्या परिगृह्य) इले ! न गन्तव्यं न गन्तव्यम्। मामेकाकिनीं परित्यज्य न गन्तव्यम्। न जाने किमिव वेपते मे हृदयम्।

इला—राजकुमारि ! भवती एकाकिनी ? परमादरणीया आचार्यमहोदयाः भवत्सेवायां समुपस्थिताः। इदानीं ममोपस्थितिरपि भवतीनां विघ्नकारिणी। प्रियतमवाग्विलसितानि मधुरोन्मादप्रस्यन्दनानि श्रोत्राभ्यां निपेयानि। (वामे कपोले करं न्यस्य) अहो ! स्मृतम्। अद्य त्वादिष्टास्मि महाराजेन, इले ! राजकुमार्याः सौभाग्यदेवतायै देवमन्दिरे दीपं प्रज्ज्वाल्य, गोग्रासविधिश्च सम्पादनीयः। तत्तु मया विस्मृतमेव। हा, पश्य, कियती

---

(राजकुमारी कुछ भी न कह कर खिड़की के मार्ग से चन्द्रमा को देखती रहती है)।

इला—(राजकुमारी के कन्धों पर दोनों हाथ रख कर) राजकुमारि ! आपके प्रियतम प्राणेश उपस्थित हो गये हैं। (राजकुमारी के मुख को दर्शनाचार्य की ओर उठाती हुई) अब मुझको जाने की अनुमति दीजिये।

विद्योत्तमा—(इला को दोनों भुजाओं से पकड़ कर) इले ! तुम मत जाओ, मत जाओ, मत जाओ। मुझको अकेली छोड़कर मत जाओ। न जाने मेरा हृदय क्यों काँप रहा है ?

इला—राजकुमारि ! आप अकेली कहाँ है ? परम आदरणीय आचार्य महोदय आपकी सेवा में उपस्थित हैं। अब मेरी उपस्थिति आपके लिये विघ्न करने वाली है। मधुर उन्माद को उड़ेलने वाले प्रियतम की वाणी के विलासों को कानो से आप पिये। (बायें गाल पर हाथ रखकर) हाँ...याद आ गया...। अब तो महाराज ने मुझको आदेश दिया था—"इले ! राजकुमारी के सौभाग्य देवता के लिये मन्दिर में दीपक जला कर गोग्रास विधि पूरी करना"। और,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रजनी व्यतीता। निशीथसमयोऽप्युपस्थितः। राजकुमारि ! दीपं प्रज्ज्वाल्य गोग्रासं चार्पयित्वा इदानीमेवाऽहं निवर्ते। अप्रसन्नीभूते महाराजे न जाने, कियानिवानर्थः सम्पद्यते।

(भुजाभ्यां मोचयित्वा निर्गच्छति)।

**विद्योत्तमा**—हा ! गतैव। (किमपि परिवृत्य एका तिर्यग्दृष्टिं दर्शनाचार्ये प्रक्षिप्य शशिनं च विलोक्य) अये ! नयनशीतलकर ! हृदयाह्लादक ! निशीथिनीवल्लभ ! तव शीतांशुरिति नामाद्य सफलं जातम्। तवेदं परिपूर्णं मण्डलमखिले जगति सकलसहृदयहृदयाह्लादकत्वं प्रसारयति। यथेयं चन्द्रिका त्वां संगम्य प्रफुल्ला, तथैव मम दशा प्रियतमं प्राणेशं समधिगम्य। ते शीतलरश्मिभिः संपृक्तो मन्दं प्रवहन् सुरभिः पवनः कुसुमानां सौरभमपहृत्य प्रत्यङ्गं मामुन्मादयतीव। अहो ! 'चन्द्रस्याङ्के यच्छ्यामलं चिह्नं दरीदृश्यते, तत्र तु निशीथिनीवल्लभस्य रतिखेदक्लान्ता प्रिया निशीथिनी गाढमुरसि स्वपितीव। अहमपि कदाचित् प्रियस्याङ्के एवमेव...(लज्जितेव भूत्वा मुखमवनमय्य) परं कथं न इमे···।

---

वह मैं भूल गई। हाय, देखो, कितनी रात बीत गई है। आधी रात हो गई। मैं दीपक को जला कर तथा गौग्रास देकर अभी आती हूँ। महाराज के नाराज होने पर क्या नहीं अनर्थ हो जायगा ? (भुजाओं को छुड़ाकर चली जाती है)।

**विद्योत्तमा**—हाय ! चली ही गई। (कुछ घूम कर एक तिरछी दृष्टि दर्शनाचार्य पर डाल कर और चन्द्रमा को देखकर) अये ! आँखों को शीतलता पहुँचाने वाले और हृदय को प्रसन्न करने वाले चन्द्रमा। तुम्हारा शीतांशु (शीतल किरणों वाला) नाम सफल हो गया। तुम्हारा यह परिपूर्ण मण्डल आज सारे संसार में सभी मनुष्यों के हृदयों को प्रसन्न कर रहा है। जिस प्रकार से तुम्हारी यह चान्दनी तुमसे मिल कर प्रफुल्लित है, अपने प्रियतम प्राणेश को पाकर मेरी भी यही अवस्था है। तुम्हारी शीतल किरणों का स्पर्श पाकर मन्द बहता हुआ सुगन्धित वायु पुष्पों के सौरभ का अपहरण करके मेरे प्रत्येक अङ्ग में उन्माद भर रहा है। अहो ! चन्द्रमा के अङ्क में जो श्यामल चिह्न दिखाई देता है, वह तो मानो रतिविलास की थकावट से थकी रजनी प्रिय के अङ्क में सो रही है, मैं भी अपने प्रिय के अङ्क में ऐसे ही...। (लज्जित सी होकर मुख को झुका कर) परन्तु ये क्यों नहीं...?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(दर्शनाचार्यं तिर्यग्विलोक्य पुनः मुखमवनमयति । व्यतियातीवार्द्धरात्रिः । निशीथ समय सू-चक घण्टाध्वनिः श्रूयते) ।

**विद्योत्तमा**—अहो पूर्णिमायाः निशार्द्धं व्यतीतम् अयमेवैतेषां मौनव्रतस्यावधिः । मधुराः सङ्गीतमयाः स्वरा आपूरयिष्यन्ति मे श्रुतिपथम् । परं कथं न इमे मामुपगच्छन्ति ? कथं न मे समीपम्...स्वभुजयोः कथं न माम्... । (लज्जया शिरोऽवनमय्य) इमे तु तथैव निश्चलाः । अहो ! प्रथममेव मधुरं मेलनम्, तदनन्तरं चेयं यामिनी मधुरसभृता, कथं न मधुरिमाणमावहति ? किं मया नार्या एव प्रथममेतेषाम्... । न हि, न हि, नैवं...लज्जाकरमेतत् । कथमेतत् सम्भवति ? न मया शक्यते कर्तुम् । परम्, हा धिक्, इमे तु तथैव स्थाणुवन्निश्चलाः । किं करवाणि ? भवतु, स्वयमेवाऽहमेतान् स्वाभिमुखान्...(दर्शनाचार्यमुपगम्य) आर्यपुत्र !

(दर्शनाचार्यो भीतभीत इव मूर्खतापूर्णदृष्ट्या राजकुमारीमवलोकयति) ।

**विद्योत्तमा**—(किञ्चिदिव सम्भ्रान्ता दर्शनाचार्यस्य दक्षिणं करं गृहीत्वा) आर्यपुत्र ! किमप्यपराद्धं मया, यद् भवन्तः इत्थम्... ।

---

(दर्शनाचार्य की ओर तिरछी दृष्टि से देखकर पुनः मुख को झुका लेती है । आधी रात के बीतने के समय की सूचक घण्टे की ध्वनि सुनाई देती है)

**विद्योत्तमा**—अहो ! पूर्णिमा की आधी रात बीत गई है । इनके मौन व्रत की यह अवधि है । मधुर सङ्गीतमय स्वर मेरे कानों में भरेंगे । परन्तु मेरे समीप क्यों नहीं आ रहे । क्यों मेरे समीप नहीं...। अपनी भुजाओं में क्यों नहीं मुझको...। (लज्जा से सिर झुका कर) ये तो वैसे ही निश्चित है । अहो ! पहले तो मधुर मिलन और इसके बाद प्रथम मिलन की मधु से भरी यामिनी । क्यों नहीं; मधुरता को बढ़ायेगी ? क्या मुझ नारी को ही पहले इनके...। नहीं, नहीं... नहीं । यह लज्जा की बात है । यह कैसे हो सकता है ? मैं ऐसा नहीं कर सकती । परन्तु, हाय धिक्कार है । ये तो वैसे ही जड़ के समान निश्चल हैं । क्या करूँ ? अच्छा स्वयं ही इनके समीप...(दर्शनाचार्य के समीप जाकर) आर्यपुत्र !

(दर्शनाचार्य डरा हुआ सा मूर्खतापूर्ण दृष्टि से राजकुमारी को देखता है) ।

**विद्योत्तमा**—(कुछ घबरा कर दर्शनाचार्य के दाहिने हाथ को पकड़कर) आर्यपुत्र ! क्या मैंने अपराध किया है, जो आप इस प्रकार...।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दर्शनाचार्यः—अरे, आं, किम् किम् किं कत्थे असि ?

विद्योत्तमा—(ससम्भ्रमं भीतेव किमपि पृष्ठतो भूत्वा) आर्यपुत्र ! किमेतत् ? भवन्तः कीहशीमसंस्कृतां भाषां भाषन्ते ?

दर्शनाचार्यः—जत्था जाणे, तत्था वदेमि । किं इच्छेसि ?

विद्योत्तमा—आचार्यमहोदय ! नाऽहं परिहास्या । सुसंस्कृतां वाचं प्रयुञ्जतां । वेपते मे हृदयम् । एकस्य विश्वविद्यालयस्य आचार्यपदमलङ्कुर्वाणाः भवन्तः... ।

दर्शनाचार्यः—किं कत्थे असि ? एकस्स बिस्सविद्दालअस्स अचारः, ई किं वत्थु ?

विद्योत्तमा—(अत्यधिकभीता ससम्भ्रमम्) आचार्यमहोदय ! भवन्तः··· भवन्तः... ।

दर्शनाचार्यः—ओ पुनर् अचार इति कत्थे असि । हं न जाणे अचार किं भवेदि ? हं तु...।

---

दर्शनाचार्य—अरे, हाँ, आ, का कहेओ ?

विद्योत्तमा—(चौंक कर घबरा कर और पीछे हट कर) आर्यपुत्र ! यह क्या है ? आप कैसी असंस्कृत भाषा बोल रहे हैं ?

दर्शनाचार्य—जैसन हमरे आवत है, वैसइ बोलेन । अउर का चाहे ?

विद्योत्तमा—आचार्य महोदय ! परिहास न कीजिये । सुसंस्कृत वाणी का प्रयोग कीजिये । मेरा हृदय काँप रहा है । एक विश्वविद्यालय के आचार्य पद को अलङ्कृत करते हुये आप...।

दर्शनाचार्य—का कहेओ, विश्वविद्यालय के आचार, ई कउन चीज है ?

विद्योत्तमा—(बहुत अधिक घबरा कर) आचार्य महोदय । आप....आप....।

दर्शनाचार्य—ओ, फिर अचार कहेओ । हम ना जानीं अचार का होता है । हंतु...।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—आर्यपुत्र ! भवन्तः... ।

**दर्शनाचार्यः**—किं कत्थे असि ? आरपुत इति किं वत्थु, हं न जाणे । हं तु मातर् पुतो भवेमि, तुमं जाणेओ ।

**विद्योत्तमा**—नाथ ! भवान्... ।

**दर्शनाचार्यः**—किं कत्थे असि, नअआथ इति ? नअआथ तु बरधस्स वन्धन भवेदि । हं तु...।

**विद्योत्तमा**—आचार्यमहोदय ! कीदृशोऽयं परिहासः ? इयं मधुयामिनी, ज्योत्स्नया सद्यः स्नाता, आर्द्रा आर्द्रा । सुमनसां रजोभिः सुरभितो मन्दं प्रवहति शीतलः पवनः । समानगुणशीलयोर्द्वयोर्युवहृदययोरेतत्प्रथमं मिलनं मधुरम् । पर भवन्तस्तु... । कथमिव सञ्जाता भवतः ? मदाननसम्मुखीनां विदधतु स्वकीयां दृष्टिम् । स्वकीयैः मधुरमधुरैः स्वरैर्मे श्रुतिकुहरम्... ।

(सहसा नेपथ्ये उष्ट्रस्यैकस्य बलबलेति स्वरः श्रूयते) ।

---

**विद्योत्तमा**—आर्यपुत्र ! आप...।

**दर्शनाचार्य**—का कहेओ ? ई आरापुत कउन चीज है, हम ना जानी । हम तो अम्मा केर लारिका हन । जानी रहेओ ।

**विद्योत्तमा**—नाथ आप...।

**दर्शनाचार्य**—का कहेओ ? नअआथ? नाथ तो बरधे के बाधा जात है । हम तो...।

**विद्योत्तमा**—आचार्य महोदय ! यह कैसा परिहास है ? यह मधु यामिनी, चन्द्रिका से सद्यः स्नाता । भीगी-भीगी पुष्पों के पराग से सुरभित मन्द बहता हुआ शीतल पवन समान गुणशील दो युवा हृदयों का यह प्रथम मधु मिलन । परन्तु आप तो...। आप कैसे हो गये हैं ? अपनी दृष्टि को मेरे समक्ष कीजिये । अपने मधुर स्वरों से मेरे कानों को...।

(सहसा नेपथ्य में एक ऊँट के बलबलाने का स्वर सुनाई देता है) ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—(गवाक्षमुन्मुखीभूय) अहो ! रक्षकाणां प्रमादः। राजप्रासादेऽयमतिकर्कशो ध्वनिः कुत्र सम्भूतः ?

**दर्शनाचार्यः**—(विहस्य कराभ्यां तालिकां वादयन्) हहो ! सव्वं तु ममं मुक्खं गराम्मं जाणेदि। तुमं तु हमं वि मुक्खा बज्ज़रमुखा भवेदि। एस्सो तु बलबलायमानह उट-उट्र-उटर इति सव्वं जाणेदि।

**विद्योत्तमा**—(ससम्भ्रमं पश्चात् भूत्वा) अरे ! त्वं त्वं त्वं कस्त्वं रे ?

**दर्शनाचार्यः**—(वक्षसि हस्तं निधाय) हं हं हं हम्...।

**विद्योत्तमा**—(सक्रोधम्) अथ किम्, त्वं त्वं त्वं रे। किं त्वं विश्वविद्यालयस्याचार्यो दर्शनाचार्योऽसि ? सत्यं वद सत्यमेव।

**दर्शनाचार्यः**—किं कत्थे असि ? हं तु परवमं कत्थे अमि, न हं तु बिसविद्दालअस्सय अचार उचारह। हं तु मातर् पुतो करिया भवेमि। गरामें सव्व ममं काष्ठभारिहं कत्थेअदि।

---

**विद्योत्तमा**—(गवाक्ष की ओर उन्मुख होकर) अहो ! रक्षकों का प्रमाद ? राजप्रसाद में यह अति कर्कश ध्वनि कहाँ से उत्पन्न हो गई ?

**दर्शनाचार्य**—(हँसकर तालियाँ बजाते हुये) अरे, सबही तो हमें मूरख अउर गंवार जानत है। मुला, तुमतो हमसौं भी सँगर मूर्ख हो। अरे, ई तो वही बड़का उट, उट्र, उटर बलबलात है। सबही जानत रहे।

**विद्योत्तमा**—(चौक कर पीछे हट कर) अरे ! तुम तुम तुम, कौन हो तुम ?

**दर्शनाचर्य**—(वक्ष पर हाथ रख कर) ह ह ह...?

**विद्योत्तमा**—(क्रोध से) और क्या ? तुम तुम तुम रे। क्या तुम विश्वविद्यालय के आचार्य दर्शनाचार्य हो ? सत्य सत्य कहो।

**दर्शनाचार्य**—का कहेओ ? हमतो तुमसे पहलवे कहा था कि हम विश्वविद्यालय के अचार उचार नाहीं हन। हमहू तो अपनी अम्मा केर लरिका करिया होई। गाम मा सवे हमहूको लकड़हारा कहेई।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—तर्हि न त्वं दर्शनाचार्यः, काष्ठभारिकस्त्वम् ?

**काष्ठभारिकः**—न हि, न हि। नाऽहं तु उचार उचारह। अह तु काष्ठभारिह।

**विद्योत्तमा**—(सक्षोभम्) तर्हि कस्त्वम् कुत्र वससि, किं करोषि ?

**काष्ठभारिकः**—कत्थेमि हं तु। हं तु मातर् पुत्तो, मातर् पुत्तो, मातर् पुत्तो। तस्सा सारधे गरामे वसेमि। वणे काट्ठे छिन्देमि, आपणे विकरय करेमि। मातर् रोट्टिका करेदि, हं खादेमि।

(राजकुमारी मूर्छितेव उभाभ्यां हस्ताभ्यां मुखमाच्छाद्य तिष्ठति। कतिपयक्षणानन्तर सा पुनः स्वयमेवोत्तिष्ठति)।

**विद्योत्तमा**—(सक्रोधमार्तस्वरेण) कथमागतस्त्वमत्र दर्शनाचार्यो भूत्वा ?

**काष्ठभारिकः**—हे राजकुंआरि ! शुणु, शुणु। वाता एव्वं भवेदि। वणे ह काट्ठे छिन्दे भवेमि। जे साक्खा ह छिन्देमि से भूमे पतेदि। हं वि से

---

**विद्योत्तमा**—तो तुम दर्शनाचार्य नहीं हो ? लकड़हारा हो...।

**लकड़हारा**—नाहीं, नाहीं...। हम अचार उचार नाहीं हन। ह तु लकड़हारा...।

**विद्योत्तमा**—(क्षोभ से) तो तुम कौन हो, कहाँ रहते हो, क्या करते हो ?

**लकड़हारा**—कह तो दीहा कि ह अम्मा केर लरिका हन, अम्मा केर लरिका, अम्मा केर लरिका। बोही के साथे गाम मा रहित हैं। वन मा लकड़ी काटे जाइत हन। बाजार लाइके बेच दीति हन। अम्मा रोटी बनाइत हन अउर हम खाइत हन।

(राजकुमारी मूर्छित सी होकर दोनो हाथों से मुख को ढक कर बैठ जाती है। कुछ क्षणों के बाद वह पुनः स्वयं ही उठ खड़ी होती है)।

**विद्योत्तमा**—(क्रोध एवं पीड़ा भरे स्वर में) तो तुम कैसे दर्शनाचार्य बनकर आये ?

**लकड़हारा**—राजकुमारि ! सुनो, सुनो। बात एसन है कि हम वन मा काटत रहन। जैसे ही एक डाँग कटि के भुइया पै आवा, तैसे ही हमहू भी ओकरे साथे निच्चे

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सारधे भूमे पतेमि। जानु फुट्टह। पीडा च महदी भवेदि (जानु परांमृशति)। से वणे दुये पंडते आगच्छेदि। मम से सहायता करेदि। ममं उट्ठायेदि। तदे हुए मज्जे एक्को पंडते परिच्छेदि, तुमं विवाह भवेदि न वा ?

**विद्योत्तमा**—ततस्ततः किं संवृत्तम् ?

**काष्ठभारिकः**—तदे ममं मातर् कत्थेअदि—एल मुक्खे मानुसे सारधे का विवाह करेदि। तदे एक्को पंडते परिच्छेति—एतस्स विवाह राजकुंवारी सारधे करवावेमि किम् ?

**विद्योत्तमा**—ततस्ततः किम् ?

**काष्ठभारिकः**—तदे मम मातर् निसेध करेदि—कत्थेअदि, अस्स वियर्थस्स मानुसस्स विवाहं राजकुंवारी सारधे उचितं भवेदि ना। पर पंडते मानेदि ना। मातर् से कत्थेअदि, जे तुमं गरामे गच्छेसि। ममं च पुनर पुनर् पाठं पाठेय नगरमज्झ आनेदि।

**विद्योत्तमा**—ततः परम् ?

---

भुइयाँ पै गिर परनं। गोडन मा चोट लाग गवा अउर बहु पिराय लागा। (घुटने को सहला कर) वोही वनवे मेहन दुइ दो पंडत आये अउर हमका सहारा देईं के उठाइन। ओहमा से एक पंडत पूछे लागा कि एकर व्याह होई गया है ?

**विद्योत्तमा**—तो फिर क्या हुआ ?

**लकड़हारा**—तो हमार अम्मा वोल परीं कि इकरे जैसन सतवारी मनई से के व्याह करी ? ओही पर पंडत पूछिस कि एकर व्याह राजकुंवारी के सगे करवा देईं ?

**विद्योत्तमा**—उसके बाद क्या हुआ ?

**लकड़हारा**—अम्मा तब बहुत मिनहा किहिन कि ई वेकार मनई राजकुंवारी केर ठीक नाही होई। मुला पंडत मानिस नाहीं। अम्मा का कहिके गामे पठाइ दिहिस अउर हमका फुरफुर समझाइ के नगर मा ले आवा।

**विद्योत्तमा**—उसके बाद ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काष्ठभारिकः—से पंडते ममं पाठं पाठेदि, जे तुमं राजस्स सभामज्झे आनेमि। परं तुमं मुखाद् एक्को वि सद्दो ना उच्चारेसि। जे राजकंवारी किं वि परिच्छेदि, तुमं मुखाद् किं वि कत्थेअसि ना। हत्थे पादं ओ किं वि करेइ सक्केइ, सक्केदे कत्थेअसि। तदे तुमं विवाहं राजकुंवारी सारधे भवेदि।

विद्योत्तमा—अथ च पुनः किम् ?

काष्ठभारिकः—पुनर् किं। से पंडते मम सनानं कराएदि, सुद्दरं सुद्दरं बसत्रे परिधाएदि, सुद्दरं सुद्दरं भोजनं कराएदि। पुनरं कत्थेअदि तुमं नांव दस्सनाचारह। पुनर् ममं राजस्स सभामज्झे आनेदि। राजानं कत्थेअदि जे ममं गुरुवरणाह दस्सनाचारह।

विद्योत्तमा—तदनन्तरम् ?

काष्ठभारिकः—तदे कि वि कत्थेअमि। मम विवाह राजकुवारी सारधे भवेदि।

विद्योत्तमा—अहो वाढम्। अधुना त्वमिदं वद त्वया मम प्रश्नाः कथमु-

---

लकड़हारा—पंडत हमरा समझाइन कि हम तुमका राजा के यहाँ ले चलब। तू वहाँ तनिको बोलेओ ना। यदि राजकुंवारी कुछ पूछे तो मुख से कुछ बोलेओ ना। हाथेस पैरेस चाहे जौन कुछ कहके हाथ, इसारे मा कह दियो। तब तुम्हारे व्याह राजकुंवारी से संगे होई।

विद्योत्तमा—और फिर क्या हुआ ?

लकड़हारा—तो फिर कहे रहा। ऊ पंडत हमका नहलाइ धुलायक, नीक वस्तर पहरायक अउर नीक नीक खायक खवाइन। कहेन कि अबे तुम दस्सनाचार होई। फिर राजा सें कहिन कि ई हमारे गुरु जी हन।

विद्योत्तमा—उसके बाद ?

लकड़हारा—फिर का कहेक रहा। हमार राजकुंवारी के संगे ब्याह होई गवा।

विद्योत्तमा—ओह अच्छा। अब यह बताओ कि तुमने मेरे प्रश्नों के उत्तर कैसे

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्तरिताः ? मम एकाङ्गुलिसङ्केते त्वया अङ्गुलित्रयं किमर्थं दर्शितम् ?

**काष्ठभारिकः**—जो राजकुवांरि ! हु जाणे जे तुमं मम एक्को चक्खुह फुट्टे इच्छेदि हं मनसि विचारेमि, जे तव्व दुए चक्खुह फुट्टे करेमि दुए अंगुरी ते। च अंगुरी ते नासिका तरोटन करेमि । तुम जाणे । जे हेतू हं तिरी अंगुरी उत्थापन करेमि ।

**विद्योत्तमा**—(करेण भालं प्रताड्य) तर्हि त्वयेदमपि कथनीयम्—मम पञ्चाङ्गुलिप्रसारणे त्वया पञ्चाङ्गुली प्रसार्य मुष्टिबन्धनं कथं कृतम् ?

**काष्ठभारिकः**—हं जाणे जे राजकुमारी मम कपोले चपेटाप्रदानं इच्छेदि। हं मनसि विचारेमि, जे हं वि एक्को चपेटाप्रदानं तथा ते कपोले करेमि । पुनरपि च तव पिट्ठमज्झे एक्को मुट्ठी-ताडनं तथा करेमि जे तुमं अत्थिपज्जरं फुट्टं भवेदि ।

**विद्योत्तमा**—(भालं पुनः करेण प्रताड्य) हा हा हताऽहम् । ताभ्यां धूर्त-

---

दिये ? जब मैंने एक अंगुली उठा कर संकेत किया तो तुमने तीन अंगुलियाँ क्यों उठाई ?

**लकड़हारा**—ओ राजकुंवारि ! हम जाना कि तुम हमार एक अंखिवे फोरे चाहत रही। तो हम सोचा कि हम एकर दुई ठो आखें फोर देईदु अंगुर ते । अउर एके अंगुर ते नकिओ तोर देई । जान गयऊ । ये ही मारे हैं तीन अंगुरी दिखावा ।

**विद्योत्तमा**—(माथे पर हाथ रख कर) हाँ...। तो तुम यह भी बताओ कि जब मैंने पाँच अंगुलियाँ फैलाईं तो तुमने पाँच अंगुलिया फैला कर मुठ्ठी क्यों बाँध ली थी ?

**लकड़हारा**—हम जाना कि राजकुंवारी हमरे गालेप एक चटखना मारे चाहत है। तौन हमने सोचा कि एक गालेप चटखना हमइ मारी अउर पीठि पँ एक धमाका ऐसन धरी कि हांड पांजर टूटि जाय ।

**विद्योत्तमा**—(माथे पर पुनः हाथ मार कर) हा, मैं मारी गई । उस समय उन धूर्त

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पण्डिताभ्यां मम सङ्केतानां तथा समीचीना व्याख्या कृता, यथा सा मे मनसोऽनुकूलतां गता । तस्मिन् कालेऽहं महामूर्खेव सञ्जाता । मम सकलाः विद्याः व्यर्थीभूताः । दोष आसीन्ममैव यदहमस्य महामूढस्य रूपसौन्दर्यप्रलोभेन विमोहिता, वञ्चिता छलिता च ।

**काष्ठभारिकः**—ओ राजकुंवारि ! हं अति प्रसन्नभवेमि । हं मनसि विचारेमि जे मम भाग्गं एव्व जागरेदि । हो तुमं केती सुहरी, केती मोहनी, केती मनसो...

**विद्योत्तमा**— (काष्ठभारिकस्य कपोले सक्रोधं चपेटं दत्वा सव्यङ्ग्यं तारस्वरेण) हो तुमं केती सुद्दरी, केती मोहनी, केती मनसो...॥ वञ्चक ! वज्रमूर्ख ! त्वया मे जीवनं विनाशितम् । त्वादृशेन जडमतिना मूर्खेण सह मादृश्याः विदुष्याः विवाहः ? अहो मरणमेव वरम् ।

(वक्षसि करं निधाय उपरि अवलोक्य)

हन्त ! विधातः ! किं त्वया एतस्मै वज्रमूर्खायैवाहं विदुषी, यौवनसम्पन्ना, ऐश्वर्यवती राजकन्या निर्मिता । कीदृशः संयोगः । कथं

---

पण्डितों ने मेरे संकेतों की इस प्रकार व्यांख्या की कि वह मेरे मन के बिलकुल अनुकूल थी । तब मैं महामूर्ख बन गई । मेरी सारी विद्या व्यर्थ हो गई । यह मेरा ही दोष था कि में इस मूर्ख के रूप-सौन्दर्य पर मोहित होकर ठगी और छली गई ।

**लकड़हारा**—राजकुंवारि ! हम बड़े खुस भयन । हाय राजकुंवारि ! हम मन मा सोचित, जे हमार भागे जाग गवा । तुम किसी सुग्घर हो । हमहू को बड़ी नीक...।

**विद्योत्तमा**—(क्रोध से लकड़हारे के गाल पर चाँटा मार कर उच्च स्वर से) हाय, तुम किसी सुग्घर हो, मोहती हो, बड़ी नीक ? दुष्ट, ठग, वज्रमूर्ख ! तूने मेरा जीवन नष्ट कर दिया है । तुम जैसे जड़ बुद्धि वाले जड़ मूर्ख के साथ मुझ जैसी विदुषी का विवाह ? इससे तो मर जाना अच्छा है । (वक्ष पर हाथ रख कर देख कर) हाय विधाता ! क्या तुमने इस जैसे वज्रमूर्ख के लिये ही मुझ जैसी विदुषी, रूप-यौवन से सम्पन्न, ऐश्वर्यवती राजकन्या को बनाया था ? कैसा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्वहं परमपराक्रमशालिनो राज्ञ एकाकिनी विद्याप्रकर्षशालिनी सन्ततिः, कथं चायं महामूढो, निर्धनो ग्राम्यः काष्ठभारिकः ? कथमहमेतस्मै...।

**काष्ठभारिकः**—(कपोलं परामृशन् रुद्धस्वरेण) राजकुंवारि !

**विद्योत्तमा**—(चक्षुषी अश्रुभिः परिपूर्य) हे विधातः ! किमपराद्धं मया ते, यदहमेव सुदारुणं दण्डिता ? हन्त, मन्ये स्वकृतपापकर्मणामेवैतत् फलम् । न जाने, पूर्वजन्मनि मया कानि कानि पातकानि कृतानि । अस्मिन् जन्मन्यप्यहं विद्यायाः रूपस्य ऐश्वर्यस्य चाभिमानेन गर्विता सर्वानेव तिरस्कुर्वाणा आसम् । मया अनेके विद्वांसः पराभूय अवहेलिताः । विवाहाकाङ्क्षिणोऽनेके युवानो राजकुमाराः स्नताकाश्च प्रतीहारैः सार्द्धचन्द्रं राजद्वाराद् बहिः निष्कासिताः । (अश्रूणि प्रोञ्छ्य) परम्... परमहं कि करवाणि ? अनेन जडमतिना वज्रमूर्खेण सह कथमिव जीवन-यात्रा सम्पद्यते ? न हि, न हि, कदापि न। अनेन इदानीमेव इतो गन्तव्यम् ।

---

संयोग है ? कहा तो मैं परम पराक्रमी ऐश्वर्यशाली राजा की एकमात्र विदुषी सन्तान और कहाँ यह महामूर्ख, निर्धन, गँवार लकड़हारा ? क्या में इसके लिये ही...।

**लकड़हारा**—(गाल को सहलाते हुये रुंधे स्वर में) राजकुंवारि !

**विद्योत्तमा**—(आँखों में आँसू भर कर) हाय विधाता ! मैंने तुम्हारा क्या अपराध किया था, जो इस प्रकार कठिन दण्ड दिया है ? हाय...। मैं समझती हूँ कि यह मेरे ही किये पापों का फल है। पूर्व जन्म में मैंने न जाने कौन से पाप किये होगे ? इस जन्म में भी मैंने विद्या और ऐश्वर्य के अभिमान में सबका ही ही तिरस्कार किया। मैंने अनेक विद्वानों को पराजित करके अपमानित किया। विवाह की इच्छा करने वाले अनेक युवा राजकुमारों और स्नातकों को प्रतीहारों से धक्के दिलवा कर राजद्वार से बाहर निकलवा दिया। (आँसू पोंछ कर) परन्तु फिर मैं क्या करूं ? इस जड़बुद्धि वज्रमूर्ख के साथ किस प्रकार जीवन बिता सकती हूँ ? नहीं, नहीं, कभी नहीं। इसको अभी जाना ही होगा।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**काष्ठभारिकः**—राजकुंवारि !

**विद्योत्तमा**—(तारस्वरेण) तूष्णीं भव रे दुष्ट ! मां सम्वोधयन्तँ किमिव न त्वां लज्जा बाधते ? अपसर, वहिर्निर्गच्छ इदानीमेव इतः । न मां दर्शय कदाचिदपि स्वकीयम् अभिशप्तँ कदर्यं मुखम् । अहं तु, सञ्जात एवं विवाहेऽहं वैधव्यमुपगता ।

**काष्ठभारिकः**—(राजकुमार्याः दक्षिणं करं परिगृह्य) एव्वं न कत्थेअसि राजकुंवारि । मम विवाहं तुमं सारधे भवेदि तुमं तु मम गिरहणी भवेदि ।

**विद्योत्तमा**—(तत्क्षणं हस्तमाकृष्य सव्यङ्ग्यमुच्चैः) अहं ते गृहिणी, ते पत्नी, ते जाया, ते प्रिया, ते प्रियतमा इति पदान्युच्चारयतस्ते जिह्वा कथं न गलति । किमहमेतद्योग्या...कण्ठमवरुध्यते ।

**काष्ठकारिकः**—(जानुनी पृथिव्यामवस्थाप्य राजकुमार्याः चरणयोः मस्तकं

---

**लकड़हारा**—राजकुंवारि !

**विद्योत्तमा**—(उच्च स्वर से) चुप रहो दुष्ट ! मुझको सम्बोधित कहते हुये क्या तुमको लज्जा नहीं आती ? तुम अभी यहाँ से दूर हो जाओं । वाहर निकल जाओ । मुझको अपना यह अभिशप्त मुख कभी नहीं दिखाना । समझूंगी कि विवाह होते ही विधवा हो गई ।

**लकड़हारा**—(राजकुमारी का दाहिना हाथ पकड़ कर) ऐसा न कहो राजकुंवारि ! अव तो तुमार हमार संगे व्याह होइ गवा है । तुम अब हमार मेहरारू हो गयऊ ।

**विद्योत्तमा**—(उसी क्षण हाथ को झटक कर व्यंग्य के साथ उच्च स्वर से) तुम्हारी मेहरारू, तुम्हारी पत्नी, तुम्हारी प्रिया, तुम्हारी प्रियतमा ? ये शब्द कहते हुये तुम्हारी जीभ क्यों नहीं जल गई, गिर क्यों नहीं गई ! क्या मैं इसी के योग्य··· कण्ठ रूध जाता है ।

**लकड़हारा**—घुटनों को पृथिवी पर टिका कर झुक कर राकुमारी के चरणों में माथा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धृत्वा वाष्पा- वरूद्धस्वरेण) एव्वं न कत्थेअसि राजकुंवारि। ममं विवाहं तुमं सारधे भवेदि । तुमं ममं गिरहणी भवेदि । सव्वे गिरहणी स्वपुरुषसारधे वसेदि। मातर् ममं तुमं च भाग्गं पक्खन्ती भवेदि।
(राजकुमारी सक्रोधं काष्ठभारिकं चरणप्रहारेणापसारयति काष्ठभारिकः भूमौ निपत्य पुनरप्युत्थाय ससम्भ्रमं स्तब्धदृष्ट्या राजकुमारीमवलोकयति) ।

**विद्योत्तमा**—रे वज्रमूर्ख ! धूर्त ! मामात्मना सह नेतुकामः ? असह्योऽ कल्पनाऽपि । त्वमितः सत्वरमपसर । यावत् पितृचरणाः वृत्तमेतन्नैव विजानन्ति, राजकर्मचारिभिश्च त्वं वधस्थलं न नेनीयसे, तावदेव त्वमितो बहिर्याहि । निर्गच्छ ।...अहो...नैव निर्गच्छसि ।
आकारयाम्यहं भृत्यान् । त एव त्वां सार्द्धचन्द्रं भर्त्सयन्तस्ताडयन्तश्च नगराद् बहिः प्रक्षेप्स्यन्ति । (तारस्वरेण) इले ! भो इले !
(धावन्ती इला प्रविशति । राजकुमार्याः दर्शनाचार्यस्य च विचित्रां मुद्रामवलोक्य स्तब्धेव तिष्ठति) ।

---

रख कर आँसुओं से अवरुद्ध कण्ठ से) ऐसन न कहो राजकुंवारी। अब हमरे संगे तुमार ब्याह होई गवा। अब तुम हमार मेहरारू होई गवा। सबइ महरारू अपने अपने मरदे के संगे रहत हैं। अम्मा हमार-तुमार डगर देखत हुई है।
(राजकुमारी क्रोध से लकड़हारे पर पैर का प्रहार करती है । लकड़हारा भूमि पर गिर कर पुनः उठ कर खड़ा होता है। वह घबराई स्तब्ध दृष्टि से राजकुमारी की ओर देखता है) ।

**विद्योत्तमा**—हे धूर्त ! वज्रमूर्ख ! मुझको अपने साथ ले जाना चाहता है ? यह कल्पना भी असह्य है। तुम यहाँ से तुरन्त दूर हो जाओ। जब तक पिता जी को यह वृत्तान्त विदित न हो जावे और राजकर्मचारी तुमको वध-स्थल पर न ले जावे, तब तक तुम यहाँ से बाहर चले जाओ, निकल जाओ। ओह...नहीं निकलते हो ? सेवकों को बुलाती हूँ। वे ही तुमको धक्के देकर झिड़कते हुये और पीटते हुये नगर से बाहर फेंक देंगे। (उच्च स्वर से) इले ! अरी इले !
(इला भागती हुई प्रवेश करती है। राजकुमारी और दर्शनाचार्य की विचित्र मुद्राओं को देख कर स्तब्ध सी हो जाती है)।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—इले ! आकारय भृत्यान् । त एनं धूर्तं वञ्चकं कठोरैः प्रहारै-स्ताडयन्तो नगरस्य वाह्यद्वारे प्रक्षेपयेयुः ।

**इला**—(सोद्वेगम्) राजकुमारि !

**विद्योत्तमा**—(सरोषम्) न श्रुतं त्वया मे वचः ? गच्छ, त्वरस्व । आकारय च भृत्यान् ।

**इला**—राजकुमारि ! राजकुारि ! किमिदं भण्यते भवत्या । कीदृशीयं भवत्याः मनसो भावना ? इमे भवत्याः पतिदेवता पाणिग्रहीता च ।

**विद्योत्तमा**—(काष्ठभारिकं सङ्केतयन्ती) हूँ । अयं धूर्तो वज्रमूर्खो वञ्चको मे पतिः पाणिग्रहीता अयं तु मर्मवेधको लोहकीलक इव...सरोषं दन्तान् घट्टयति ।

**इला**—राजकुमारि ! इमे भवत्याः पतिदेवताः परमपूजनीयाः दर्शनाचार्याः ।

---

**विद्योत्तमा**—इले ! सेवकों को बुलाओ । वे ही इस धूर्त ठग को कठोर प्रहारों से पीटते हुये नगर से बाहर फैंक दें ।

**इला**—(घबरा कर) राजकुमारि !

**विद्योत्तमा**—(क्रोध से) तुमने सुना नहीं, मैं क्या कह रही हूँ ? जाओ, शीघ्रता करो और सेवकों को बुला लाओ ।

**इला**—राजकुमारि ! राजकुमारि ! यह आप क्या कह रही हैं ? आपकी यह कैसी ये आपके परिणेता पतिदेवता...।

**विद्योत्तमा**—(लकड़हारे की ओर संकेत करते हुये) यह धूर्त, वज्रमूर्ख, ठग, मेरा पति और परिणेता ? यह तो कोमल अङ्गों में प्रविष्ट कील के समान है । (क्रोध से दान्त पीसती हैं)

**इला**—राजकुमारि, ये आपके पतिदेवता परम पूजनीय दर्शनाचार्य हैं । शास्त्रार्थ

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शास्त्रार्थे विजित्य प्रश्नसागरमुत्तीर्य भवत्याः प्रतिज्ञां च पूरयित्वा वैदिकरीत्या एभिः पाणिगृहीतः ।

**विद्योत्तमा**—चक्षुषी अश्रुभिः परिपूर्य अवरुद्धस्वरेण) इले ! न जानासि त्वमेतं कूटं कपटं कैतवं छलं छद्म प्रतारण वञ्चनम् अतिसन्धानं वा। नायं दर्शनाचार्यो, न कोऽप्यन्याचार्यः। अयं त्वेको जडो ग्राम्यो वज्रबुद्धिः काष्ठभारिको भिक्षुक इव। करिया इत्यस्य नाम। तौ धूर्तपण्डितौ मामतिसन्धाय एतेन व्यवाहयताम् ब्रूहि; त्वमेव अहमेतेन वज्रमूर्खेण सह, यः शब्दानपि न शुद्धतया उच्चारयितुं क्षमते, कथमिव जीवनयात्रां कर्तुं पारयेयम् ? (कराभ्यां शिरोऽवष्टभ्य) कथमिव जीवनं यापयेयम् ?

**इला**—(स्तब्धेव भूत्वा) राजकुमारि ! भवत्येदं किमिति भण्यते ? अप्येतत् ? सत्यम् (अग्रे गत्वा काष्ठभारिकमुपगम्य) कथमाचार्य ! किं राजकुमार्याः कथनं सत्यम् ? न भवान् दर्शनाचार्यः ?

---

में जीत कर प्रश्नरूपी समुद्र को पार करके और आपकी प्रतिज्ञा को पूरा करके इन्होंने वैदिक रीति से हाथ पकड़ा है।

**विद्योत्तमा**—(आँखों में आँसू भर कर रुधे स्वर में) इले ! तुम, इस कूट, धूर्तता, छल, छद्म, प्रतारणा, वञ्चना और षड्यन्त्र को नहीं जानती हो। यह दर्शनाचार्य नहीं है। यह कोई भी आचार्य नहीं है। यह तो एक जड़ गंवार' वज्रमूर्ख, भिखारी सा लकड़हारा है। इसका नाम करिया है। उन धूर्त पंण्डितो ने मुझको ठग कर मेरे साथ इसका विवाह करा दिया। तुम ही कहो कि वज्रमूर्ख के साथ, जो शब्दों का भी शुद्ध उच्चारण नहीं कर सकता, कैसे जीवन बिता सकती हूँ ? (हाथों से सिर पकड़कर) कैसे जीवन बिता सकती हूँ।

**इला**—(स्तब्ध सी होकर) राजकुमारि ! यह आप क्या कहती हैं ? क्या यह सत्य है ? (आगे बढ़ कर और लकड़हारे के समीप जाकर) क्यों आचार्य ! क्या राजकुमारी का कथन सत्य है ? क्या आप दर्शनाचार्य नहीं हैं।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**काष्ठभारिकः**—हाय मातर् कतिवारं कत्थेअमि। हं तु आचार उचानर भवेमि ममं नावं केवलं करिया अत्थि करिया।

**इला**—(हस्ताभ्यां शिरोऽवष्टभ्य उपविश्य) हे भगवन्! हे शिव कीदृशोऽयमनर्थः संवृत्तः? (उत्थाय) अरे धूर्त! वज्रमूर्ख! कीदृशोऽयमनर्थस्त्वया आचरितः? जानास्येतस्य कर्मणः को दण्डः। उचितो दण्डस्त्वयमेव यत्त्वमर्द्धशरीरं भूमौ निवेशितो बुभुक्षितैः कौलेयकैश्चर्वणीयो भक्षणीयश्च। राजकुमार्या त्वमस्मै कपटाय न स्वल्पमपि दण्डितः।

**काष्ठभारिकः**—अहो रे रोस्सं मा करेहि। यदि राजकुवारी ममं सार्धे वसिते न इच्छेसि, तर्हि हं गांमे मातर् पास्से गच्छेमि (बहिर्गन्तुमुद्यतो भवति)।

**इला**—(किमपि विचार्य काष्ठभारिकं च भुजेन परिगृह्य) भो करिया महोदय! क्षणं तिष्ठ। (राजकुमारीमुन्मुखीभूय) राजकुमारि!

**विद्योत्तमा**—इले!

---

**लकड़हारा**—हाय दैय्या! हम कै बार कह दिहिन कि हम अचार उचार नहीं हन। हामर नाव खाली करिया हन, बस़ करिया।

**इला**—(हाथों से सिर पकड कर और बैठ कर) हे भगवन्! हे शिव! यह कैसा अनर्थ हो गया है? (उठ कर) हे धूर्त! वज्रमूर्ख! यह तुमने कैसा अनर्थ किया है? जानते हो, इसका क्या दण्ड है? उचित दण्ड तो यही है कि तुमको आधा भूमि में गड़वा कर भूखे कुत्तो को खिला दिया जावे। राजकुमारी ने तुम्हारी इस धूर्तता के लिये जरा सा भी दण्ड नहीं दिया हैं।

**लकड़हारा**—हाय दैया! रिसियाओं नाहीं। हे राजकुमारी हमरे संगे नहीं रहा चाहत, तो हम अपने अम्मा के पासे गामे चले जाइब। (बाहर जाने के लिये उद्यत होता है)।

**इला**—(कुछ सोच कर और लकड़हारे की भुजा पकड़ कर) हे करिया जी। थोड़ा सा ठहरिये। (राजकुमारी की ओर उन्मुख होकर) राजकुमारि!

**लकड़हारा**—इले।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इला—क्षमां याचयन्ती किमपि निवेदयितुकामा ।

विद्योत्तमा—विश्रब्धं वद ।

इला—राजकुमारि !

विद्योत्तमा—वद, वद ।

इला—राजकुमारि ! नाऽहमधिकारिणी भवतीमनुशासितुम् । नापि मयि योग्यता एतादृशी । परं भवत्या मम स्नेहभावः किमपि निवेदयितुं विवशीकरोति ।

विद्योत्तमा—आम्, कथय, कथयसि किन्न ?

इला—राजकुमारि ! धात्रा ललाटपट्टे लिखितानां रेखाणां मार्जने कोऽपि न क्षमः । देवताभिरयमेव वरः भवत्यै निर्धारितः । साम्प्रतं भवती एनमेव प्रसन्नेन चेतसाऽङ्गीकरोतु ।

---

इला—यदि आप क्षमा करें, तो मैं कुछ निवेदन करूं ?

विद्योत्तमा—निश्चिन्त होकर कहो ।

इला—राजकुमारि !

विद्योत्तमा—कहो कहो ।

इला—राजकुमारि ! आपको उपदेश देने का मुझको अधिकार नहीं है । नाहीं मुझमे इतनी योग्यता है । तो भी आपके प्रति स्नेह का भाव मुझको कुछ निवेदन करने के लिये विवश कर रहा है ।

विद्योत्तमा—हां, हाँ, कहो । कहती क्यों नहीं ?

इला—राजकुमारि ! विधाता ने ललाट पर जो रेखायें लिख दी हैं, उनको कोई मिटा नहीं सकता । देवताओं ने इसी वर को आपके लिये निर्धारित किया था । अब आप इसको प्रसन्न मन से स्वीकार करलें ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—(सक्रोधम्) इले ! किमिदं त्वया भण्यते ?

**इला**—राजकुमारि ! सत्यं तथ्यं च वदामि। रोषं विहाय शान्तेन मनसा विचारयतु भवती। निर्धनं वा गुणहीनं वा, विकलाङ्गं वा आर्यललनाः यमेव वरं प्रथमं वरयन्ति, तमेव देवतामिव मानयन्ति । भवती यदि सत्यमेव देवीं सरस्वतीं प्रति श्रद्धां भक्तिं निष्ठां च मनसि धत्ते, तदा स्वपरिश्रमेणैनं मूर्खमपि विद्वांसं विधातुं पारयति। सुरूपोऽयं युवा सरलो निश्छलः सत्यशीलोऽपि प्रतिभाति।

**विद्योत्तमा**—हुम्। किमहं शठमेनं वज्रमूर्खं प्रवञ्चकम्...।

**इला**—आम् राजकुमारि ! भवती स्वयमेव एनं शिक्षयतु । स्नेहधाराप्रवाहायित्री पत्नी योग्यतमा शिक्षिका । कान्तासम्मितोपदेश एवं युक्तमः। यदि च भवत्याः भाग्ये सुखम्, अस्य च भाग्ये विद्या, अयमपि भवतीव

---

**विद्योत्तमा**—(क्रोध से) इले ! यह तुम क्या कहती हो ?

**इला**—राजकुमारि ! सत्य और तथ्य की बात कहती हूँ आप क्रोध छोड़ कर शान्त मन से विचार करें। आर्य ललनायें, चाहे निर्धन हो, चाहे गुणहीन, चाहे विकलांग हों, जिसको प्रथम वरण करती हैं, उसको ही देवता के समान मानती हैं। यदि आपकी देवी सरस्वती के प्रति सत्य भक्ति और निष्ठा है तो आप अपने परिश्रम से इस मूर्ख को भी विद्वान् बना सकती हैं। यह सुन्दर तो है ही, सरल निश्छल और सच्चा भी प्रतीत होता है ।

**विद्योत्तमा**—हूँ। क्या मैं इस शठ, वज्रमूर्ख, प्रवञ्चक को...।

**इला**—हाँ, राजकुमारि ! आप स्वयं ही इसको शिक्षित करने का प्रयत्न करें। स्नेह की धारा को प्रवाहित करने वाली पत्नी सबसे योग्य शिक्षिका है। कान्तासम्मित उपदेश ही सबसे उपयुक्त होता है। यदि आपके भाग्य में सुख है और इसके भाग्य में विद्या है, तो यह भी आपके ही समान विद्या से सम्पन्न हो

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्यासम्पन्नो भविता । दृढोऽध्यवसायः परिश्रमश्च किं-किं न साधयति । पठतो मूर्खत्वं नास्ति ।

**विद्योत्तमा**—न हि, न हि, नैव सम्भवति । अनेन वज्रमूर्खेण सह एकस्य दिनस्य तु वार्ता का, क्षणमप्यवस्थनामसम्भवम् । अतो यावत्काचिदप्रिया घटना न संघटते, तावत् त्वमेतं धूर्तं वञ्चकमितो बहिः निस्सारय ।

**इला**—राजकुमारि ! पुनरपि निवेदयामि । भवती शान्तेन चित्तेन विचारयतु । अग्रे विषमिवैषव्यवहारः परिणामेऽमृतोपमः सम्भाव्यते । समयावधिः भवतीं पश्चात्तापानले धक्ष्यति । नारीणां भूषणं पतिरेव । राजकुमारि !! आर्याङ्गनाः पातिव्रताधर्मपरायणाः । अनेकाः ऐतिहासिककथाः प्रसिद्धाः । सती सावित्री स्वपत्युः प्राणानपि यमपाशादुन्मोचयामास । सती बेहुला स्वकीयं कुष्ठरोगिणमपि पतिं मृत्युमुखादाकृष्य रोगरहितं चकार । सती सुकन्या वृद्धमपि च्वयनं नवयुवानम्... ।

---

जावेगा । दृढ़ अध्यवसाय और परिश्रम से कौनसा कार्य सिद्ध नहीं हो जाता ? पढ़ने वाला मूर्ख नहीं रहता ।

**विद्योत्तमा**—नहीं, नहीं ऐसा नहीं हो सकता । इस वज्रमूर्ख के साथ एक दिन की तो बात क्या है, एक क्षण भी बिताना असम्भव है । अतः इससे पहले कि कोइ अप्रिय घटना न हो जावे, इस धूर्त और ठग को यहाँ से बाहर निकाल दो ।

**इला**—राजकुमारि ! मेरा फिर भी निवेदन है, आप इस पर शान्त मन से विचार कर लें । पहले यह व्यवहार विष के समान लगता हुआ भी परिणाम में अमृत के समान हो सकता है । समय बीत जाने पर आप पश्चात्ताप की अग्नि में जलेगी । नारी का आभूषण पति ही होता है । राजकुमारि ! आर्य ललनायें पतिव्रत धर्म के प्रति निष्ठा रखती हैं । उनकी अनेक इतिहास- प्रसिद्ध कथायें हैं । सती सावित्री अपने पति के प्राणों को यमराज के द्वार से भी छुड़ाने में समर्थ हो गई थी । सती बेहुला ने अपने कोढी पति को मौत से मुख से खींच कर नीरोग कर दिया था । सती सुकन्या ने वृद्ध भी पति को युवा... ।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—नैवम्, नैवम्। नेदं सम्भवति। असम्भवमेव। सम्यगवगच्छाम्येताः कथाः। नाहमधिकमुपदेष्टव्या। अहमेतेन मूर्खेण सह क्षणमपि स्थातुं न क्षमा न च एनं पतिरूपेण स्वीकर्तुम्।

**इला**—राजकुमारि !

**विद्योत्तमा**—नैवं ब्रूहि। अनेन सहनिवसनं नरकाग्निसन्तापसमम्। न च योग्योऽयं महाजडमतिः विद्याध्ययनाय। तत्र सर्वे प्रयत्नाः भस्मनि हुतमिव भविष्यन्ति। सागराम्भस्तृणोल्कया न तापयितुं शक्यम्।

**इला**—राजकुमारि ! तथापि भवती पुनरेकधा...।

**विद्योत्तमा**—मया त्वमनेकशः समुदीरिता, नैवं, नैवं नैवमेतत् सम्भवति। नैवं पुनः कथनीयम्। अयं काष्ठभारिकः कदाचिदपि विद्याध्ययने न क्षमः।

---

**विद्योत्तमा**—नहीं, नहीं। वह सम्भव नहीं है। यह असम्भव ही है। मैं इन सब कथाओं को भली प्रकार जानती हूँ। मुझे अधिक उपदेश न दो। मैं इस ठग लकड़हारे के साथ क्षण भर भी नहीं रह सकती। मैं इसको पति के रूप में स्वीकार नहीं कर सकती।

**इला**—राजकुमारी !

**विद्योत्तमा**—बोलो मत। इसके साथ रहना तो नरक की ज्वालाओं के सन्ताप के समान है। यह अत्यधिक जड़ बुद्धि वाला विद्या के अध्ययन के अयोग्य है। इसमें सारे प्रयत्न राख में किये गये हवन के समान विफल होंगे। समुद्र के जल को तिनकों की आग से गरम नहीं किया जा सकता।

**इला**—राजकुमारी ! तब भी आप पुनः एक वार...।

**विद्योत्तमा**—मैंने तुमको अनेक बार कह दिया है। नहीं, नहीं, यह नहीं हो सकता। कभी नहीं हो सकता। इस प्रकार फिर मत कहना। यह जड़बुद्धि लकड़हारा कभी विद्याध्ययन से समर्थ नहीं होगा।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इला—राजकुमारि !

विद्योत्तमा—भगवतीं सरस्वतीमाराधयितुं पूर्वजन्मसंस्काराणाम्, अस्मिन् जन्मनि अध्यवसायाभ्यासयोः इति त्रयाणामेव हेतूनामनिवार्यता। संस्कार-विहीनोऽयं तुच्छातितुच्छो जीवो न क्षमः भगवत्याः सरस्वत्याः कृपा-कटाक्षेषु। (सगर्वमाकुञ्च्य) विद्योत्तमा विद्यावानेवार्हति। योग्येन योग्यतमः संगच्छते।

इला—राजकुमारि! पुनरपि भगवती...।

विद्योत्तमा—त्वं यदि नाकारयसि भृत्यान्, अहं स्वयमेव गच्छामि। अयं धूर्तो धृष्टः प्रवञ्चको नेत्रकङ्करः काष्ठभारिकः स्वयमेव तु न गमिष्यति। अयं तु...(बहिर्गन्तुमुद्यता भवति)।

काष्ठभारिकः—(राजकुमारीमुन्मुखीभूय) हे राजकुंवारि ! ह बहु मुक्खो, बज्जमुक्खो भवेमि। मम मनागपि बुद्धि न अत्थि। हं नापि पठं नापि

---

इला—राजकुमारी !

विद्योत्तमा—भगवती सरस्वती की आराधना के लिये पूर्व जन्म के संस्कारों का, इस जन्म के दृढ अध्यवसाय का और पुनः-पुनः अभ्यास का, इन तीन हेतुओं का होना अनिवार्य है। यह संस्कारों से रहित तुच्छ जीव कभी भी भगवती सरस्वती के कृपा-कटाक्षों की कृपा को प्राप्त नहीं कर सकता। (गर्व से तनकर) विद्योत्तमा तो विद्यावान् के ही योग्य है। योग्य से योग्यतम का ही मिलन होता है।

इला—राजकुमारि ! आप फिर भी...।

विद्योत्तमा—यदि तुम सेवकों को नहीं बुलाती हो, तो मैं ही जाती हूँ। यह धूर्त, ढीठ, ठग लकड़हारा आँख में पड़े कंकर के समान अपने-आप तो जायेगा नहीं। यह तो...(बाहर जाने को उद्यत होती है)।

लकड़हारा—(राजकुमारी की ओर उन्मुख होकर) राजकुंवारि ! हम बड़े मूरख हन, बज्जमूरख हन। हमरे तनिको अकिल नहीं रही। हम कछु पढौ-लिखौ नाहीं।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लिखं। परं हं तुमं बच्चना करेमि ना। हं बच्चना जाणे ना। हं कदापि कत्थेआमि ना जे हं बहु पठं अचारह भवेमि। पंडते ममं बहु कत्थेअदि तुमं विवाह राजकुंवारी सारधे कराएदि। मम मातर् निसेध करेदि। परं पंडते मानेदि ना। हं सत्थ सत्थ कत्थेअमि। तुमं मम अरु अपमानं करेति ना। हं तु बहु बहु मुक्खो भवेमि। तुमं च मम सारधे बसिते इच्छेति ना। हं गच्छेमि। हं कधं वि विदिया परापेमि। हं देवता पूजा-पाठ करेमि। अराधना करेमि। पठेमि, विदिया परापेमि। विदवान भवेमि। तदे तु हं तुमं मुखं दरसएमि।

(गन्तुमुद्यतो भवति)

विद्योत्तमा—(किञ्चिद् विचार्य) अयि करिया महोदय! क्षणं श्रूयताम्। पङ्गुः हिमगिरेरुत्तुङ्गं शिखरमारोढुं न क्षमते। तवापि विद्याध्ययनमसम्भवमेव। तथापि। त्वामहं प्रतीक्षिष्ये। विद्यामधिगम्य समागते त्वयि

---

मुला, हम धोखा नाहीं करब। हम धोखा करहू नाहीं जानित। हम तुंह से यहहू नाहीं कहा कि हम बहु पढ़े हैं अउर अचार हैं। हमसे पण्डत लोग बहु बार कहिन कि तुम्हारा ब्याह राजकुंवारी के संगे कराय देव। हमारा अम्मा मिनह किहिन, मूलाऊ लोग माने नाहीं। हम सच्चै सच्चा कही। तूं हमार अउरो अपमान करौ ना। हम तो मूरख हइये हैं अउर तूं हमरे संगे रहा नाहीं चाहत हियऊ, तो हम जाइत। हम कैसहूं न कैसहूं विदिया पाइब। हम देवता के पूजा-पाठ करब। देवता के आराधना करब अउर पढिकै विदिया पाइब। विदवान हुई जाव। तबे आयक तुम्हें अपना मुख दिखाइब। (जाने को उद्यत होता है)।

विद्योत्तमा—(कुछ सोचकर) ओ करिया महोदय! क्षण भर सुनिये। लंगड़ा मनुष्य हिमालय के ऊँचे शिखर पर नहीं चढ़ सकता। तुम्हारा विद्या पढ़ना भी असम्भव ही है। तो भी मैं तुम्हारी प्रतीक्षा करूंगी। विद्या को पाकर तुम विद्वान् के घर के द्वार पर आने पर यह प्रश्न पूछूंगी—"अस्ति-कश्चिद्-वर्गः" ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विदूषि गृहद्वारं प्रश्नमहमेतं प्रक्ष्यामि—"अस्ति-कश्चिद् वागर्थः ?" प्रश्ने सम्यक् समासाधिते कक्षस्यान्तः प्रवेशाधिकारी त्वं मे भविता ।

(काष्ठभारिकः "अत्थि कच्चि बाग अत्थि कच्चि बाग" इति शब्दान् पुनः पुनरुच्चारयन् कक्षाद् बहिर्भवति । राजकुमारी इला च तं निर्निमेषं पश्यतः । गते च काष्ठभारिके राजकुमारी उभाभ्यां कराभ्यां वदनमावृत्य पर्यङ्के निपत्य मन्दमन्दं रोदिति) ।

(यवनिका पतति)

इति तृतीयोऽङ्कः

---

इस प्रश्न का समीचीन उत्तर देने पर ही तुम इस कक्ष में प्रवेश करने के अधिकारी होंगे ।

(लकड़हारा अत्थि कच्चि वाग, अत्थि कच्चि वाग, इन शब्दों का बार-बार उच्चारण करता हुआ कक्ष से बाहर निकल जाता है । राजकुमारी और इला उसको निर्निमेष देखते रहते हैं । लकड़हारे के चले जाने पर राजकुमारी दोनों हाथों से मुख को ढककर पलंग पर गिर कर सिसकने लगती है । नेपथ्य में शोकसूचक वाद्य-ध्वनि होती है) ।

(यवनिका गिरती है)

तीसरा अङ्क समाप्त हुआ

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# चतुर्थोऽङ्कः

(दशवर्षानन्तरम् । महाराजसुदर्शनस्यान्तः पुरस्य प्रमदवनम् । शरत्समयः । माधवीवीथिमध्ये राजकुमारी विद्योत्तमा इला च सरलशुभ्रकौशेयवसनावृते हस्तस्थितपुष्पकरण्डिके पुष्पावचयं नाटयन्त्यौअवलोक्येते) ।

इला—(करण्डिकां प्रदर्श्य) अवचितानि प्रभूतानि कुसुमानि देवपूजनाय । निवर्ततां भवती । अहमपि परिश्रान्ता ।

विद्योत्तमा—(सम्मुखं सङ्केतयन्ती) पश्य, दीर्घिकायारामणीयकम् । साच प्रफुल्लपुण्डरीकेन्दीवरकोकनदसुमनो विभूषितं स्वच्छसुनीलसलिलालङ्कृतम् ।

इला—अवलोकयतु भवती राजहंसयुगलं कमलिनी किसलयमध्यवर्तिजलविहारि-

---

# चौथा अङ्क

(दस वर्ष पश्चात् महाराज सुदर्शन के अन्तःपुर का प्रमद-वन । शरद्-ऋतु का समय । माधवी लताओं की वीथी के मध्य में राजकुमारी विद्योत्तमा और इला हाथों में पकड़ी हुई कण्डियों में पुष्पों को चुनती हुई दिखाई देती हैं । दोनों सादे श्वेत रेशमी वस्त्र पहने हैं) ।

इला—(कण्डी को दिखाकर) राजकुमारि ! बहुत फूल चुन लिये हैं । देवपूजन के लिये पर्याप्त होंगे । आप लौट चलें । मैं भी थक गई हूँ ।

विद्योत्तमा—(दूर पर संकेत करके) खिले हुये श्वेत, नीले और लाल कमलों से विभूषित बावड़ी के सौन्दर्य को देखो, जो स्वच्छ नीले जल से अलङ्कृत है ।

इला—कमलिनियों के किसलयों के मध्य जल में विहार करने वाले राजहंस के युगल को

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

णम् । मन्ये, श्यामलहरितपत्रमध्ये श्यामालिङ्गननिबद्धेयं राधिका गौरवर्णा ।

**विद्योत्तमा**—पश्य, पश्य । दीर्घिकातटे लम्बग्रीवान् लम्बश्यामलारुणसुदृढ-चञ्चुकैर्युतान् हिमसुधावलिप्तपक्षान् कूजतः सारसान् ।

**इला**—अहो, अयं तु नेत्रनिमीलनदर्शितभक्तिव्यापारः पाषण्डको बकः मुग्धच्छलितां मत्स्यिकां स्फुरन्तीं चञ्चुकया संपीड्य सुदूरमुत्पतति ।

**विद्योत्तमा**—पश्य, दीर्घिकातीरवर्तिनीमशोकपरम्परां हरितारुणकिसलयैः हरितरक्तमणिभिरिव खचितान्तरालाम् । अत्र दिनकरकरालोकलब्ध-प्रियसङ्गमा चक्रवाकी प्रियतमानीतमधुरफलशकलानास्वादयति ।

**इला**—इतोऽप्यवलोकयतु भवती । इयमपरा काचित् सारिका रसालविटपा-

---

आप देखें । प्रतीत होता है कि श्यामल हरे पत्तों के मध्य में कृष्ण का आलिङ्गन करती हुई गोरी राधा हो ।

**विद्योत्तमा**—देखो, देखो । बावड़ी के किनारे लम्बी ग्रीवा वाले लम्बी काली-लाल चोंचों को ऊपर उठाये हुये हिम और सुधा से लिपे मे पंखों वाले सारस कूजन कर रहे हैं ।

**इला**—ओह ! आँखों को बन्द करके भक्ति का ढोंग दिखाता हुआ यह पाखण्डी बगला भोली ठगी गई छटपटाती मछली को चोंच में दबाकर दूर उड़ा जा रहा है ।

**विद्योत्तमा**—हरे-लाल किसलयों द्वारा हरी-लाल मणियों से जड़ी हुई अशोक वृक्ष की पंक्ति को बावड़ी के तट पर देखो । यहाँ सूर्य की किरणों के प्रकाश से प्रिय के मिलन को प्राप्त करने वाली चकवी प्रिय के द्वारा लाये गये बिस के टुकड़ों को खा रही है ।

**इला**—आप इधर भी देखिये । यह कोई दूसरी मैना आम की शाखाओं का

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्लिष्टबिम्बवल्ल्याः परिपक्वबिम्बफलान्यादाय समागच्छन्तं हरितच्छद रक्तवक्रतुण्ड कीरमलोक्यन्ती क्रीडा-व्यसनिनी इतस्ततः बकुलशाखासु उत्प्लवते ।

**विद्योत्तमा**—दीर्घिकामध्यनिर्मितभ्रमद्धारायन्त्रच्छिद्रेभ्यः समुच्चलन्तोजल-पृषत्कणाः परितो वर्षन्तः सप्लावयन्ति सकल स्थावरजङ्गमवस्तुजातम् । भवतु, आयाहि, अत्रत्यानि सलिलजातानि कुसुमान्यपि भवेयुः देवपूजन-प्रसादानि ।

**इला**—(करतलेन तलाटश्रमपृषत्कणान् प्रोञ्छ्य) विरमतु भवती । दूरस्थिता तावद्दीर्घिका । वियति सुदूरमधिरोहति भगवान् भास्करः । एतानि यूथिका–शेफालिका–मालती–मल्लिका–नवमल्लिका–मुक्तक-जपा–करबक-बन्धूककुसुमान्येव... ।

**विद्योत्तमा**—अस्तु । अलमेतेन कुसुमावचयेन । अतिश्रान्ता त्वम् । श्रमबिन्दु-भिश्चर्चितमेव ते पुण्डरीकपटलपाण्डुरं शोभनमाकर्षकं वदनम् ।

---

आलिङ्गन करने वाली बिम्ब की लता से पके बिम्ब-फल को लेकर आते हुये हरे पंख तथा लाल-टेढ़ी चोंच वाले तोते को देखकर इधर-उधर मौलसिरी की शाखाओं पर उछल रही है ।

**विद्योत्तमा**—बावड़ी के मध्य में बने घूमते फव्वारे के छिद्रों से उछलती जल की बूंदे चारों ओर बरसती हुई जड़-चेतन सभी वस्तुओं को भिगो रही है । अच्छा, आओ । यहाँ के कमल भी देवता के पूजन की कृपा को प्राप्त करे ।

**इला**—(हथेली से माथा पोंछ कर) आप विश्राम करें । बावड़ी दूर है । आकाश में सूर्य ऊँचा चला गया है । ये जूही, हरसिंगार, मालती, मल्लिका, नवमल्लिका, मोलिया, हुड़हुल, कुरबक और दोपहरिया के फूल ही... ।

**विद्योत्तमा**—तो अब फूल मत चुनो । तुम थक गई हो । श्वेत कमल की पंखुड़ियों के समान गोरा सुन्दर तुम्हारा आकर्षक मुख पसीने की बूंदों से सुशोभित हो रहा है ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इला—न हि, तथा श्रान्ता। यदि भवत्यै रोचते...।

विद्योत्तमा—इले ! भगवान् भास्वान् अतिदूरं गतः। शारदोऽयं सन्तापोऽतितरां सन्तापयति। आगच्छ। अविदूरमिदं माधवीलतापरिवेष्टितं कदलीगृहम्। तत्र मरकतवेदिकायां दीर्घिकाकमलिनीवातेन परिश्रमं विनोदयावः।

इला—तत्र चाविरतं निपतद्भिः माधवीकुसुमैः शिरसि वपुषि च प्रसाद्यमानयोरावयोः श्रमक्लान्भिावः तिरोभविष्यति। (परिक्रम्य) इदं तावत्कदलीगृहम्।

(विद्योत्तमा इला च माधवीलतापरिवेष्टितं कदलीगृहं प्रविश्य माधवीकुसुमास्तीर्णायां मरकतवेदिकायामुपविशतः)।

इला—राजकुमारि ! अपि सुखयति भवतीं दीर्घिकासलिलस्पर्शसुशीतलः कमलमकरन्दापहारी सौरभयुतो मन्दपवनः ?

---

इला—राजकुमारि ! नहीं, मैं वैसी नहीं थकी हूँ। यदि आपकी आज्ञा हो तो...।

विद्योत्तमा—इले ! वैसी बात नहीं है। आकाश में सूर्य ऊँचे चढ़ चुके हैं। शरद्-ऋतु की यह धूप बहुत सताती है। आओ, यह समीप ही माधवी की लताओं से घिरा हुआ कदलीगृह है। यहाँ मरकत की वेदिका पर बैठकर बावड़ी की ओर से कमलिनी के पत्तों का स्पर्श करके आती वायु से थकावट को दूर करें।

इला—और वहाँ माधवी के पुष्प निरन्तर हमारे शरीर और सिरों पर गिरते रहेंगे। इससे हमारी थकावट बिलकुल दूर हो जावेगी। (घूम कर) यह कदलीगृह है।

(विद्योत्तमा और इला माधवीलता से घिरे हुये कदलीगृह में प्रवेश करके माधवी के पुष्पों से भरी मरकत-वेदिका पर बैठती है)।

इला—राजकुमारि ! बावड़ी के जल के स्पर्श से शीतल और कमलों के मकरन्द के सम्पर्क से सुगन्धित मन्द वायु क्या आपको सुख दे रही है ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्योत्तमा—(अन्यमनस्कस्वरेण) किमुक्तं त्वया ?

इला—अपि सुखयति... ।

विद्योत्तमा—(आर्तस्वरेण) सुखयति सखि ! सुखयति । इले ! किं न पश्यसि त्वं पुष्पस्तबकस्तनाभिः शाखाभुजाभिर्गाढमालिङ्गितान् फलपुष्पशोभित-विटपान् विटपिनः ?

इला—पश्यामि राजकुमारि पश्यामि । (स्मरणमभिनीय) हन्त ! न साफल्य-मधिगता अस्मत्प्रयासाः दर्शनाचार्यरूपधारिणस्तस्य कष्ठभारिकस्या-न्वेषणे ।

विद्योत्तमा—न सफलीभूताः । (मस्तकं कराभ्यामाकुञ्च्य अवरुद्धस्वरेण) अहो शनैः शनैरयं दशवर्षाणां दीर्घावधिर्व्यतीतः । सर्वा घटनाः स्वप्नवत् प्रति-भान्ति ।

---

विद्योत्तमा—(अनमने स्वर से) तुमने क्या कहा ?

इला—क्या आपको सुख दे रही है ?

विद्योत्तमा—(पीड़ित स्वर में) सुख दे रही है सखि ! सुख दे रही है । क्या तुम नहीं देख रही हो कि पुष्पगुच्छ रूपी स्तनों वाली ये लतायें निश्चिन्त होकर शाखारूपी भुजाओं से फलों और पुष्पों से शोभित वृक्षों का प्रगाढ़ आलिङ्गन कर रही है ।

इला—देखरही हूँ, राजकुमारि ! देख रही हूँ । (स्मृति का अभिनय करके) खेद है कि दर्शनाचार्य का रूप रखने वाले लकड़हारे की खोज करने में हमारे प्रयास सफल नहीं हुये ।

विद्योत्तमा—नहीं हुये । (माथे को हाथों में थाम कर अवरुद्ध स्वर में) ओह ! धीरे-धीरे यह दस वर्षों की लम्बी अवधि व्यतीत हो गई । सारी घटनायें स्वप्न के समान प्रतीत होती हैं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इला**—राजकुमारि ! अलं परितप्य । बलवती खलु भवितव्यता । कस्तां रोद्धुं क्षमः ? भर्तुः अन्वेषणाय भवत्याः कः प्रयासो न विहितः । सकले भरत-खण्डेऽस्माकं चाराः विचरन्ति । भवती मया सह स्यन्दनमारुह्य परिचितेष्व-परिचितेषु वा असंख्येषु स्थानेषु परिभ्रान्ता । अन्यत्रापि भवती गन्तुकामा ।

**विद्योत्तमा**—इले ! सत्यमेव वदसि ।

**इला**—राजकुमारि ! अनवरतमतीतस्मरणेन को लाभः ? परमिदं तु मे मनसि स्फुरतीव, कश्चित् जपतीव कर्णे यदवश्यं भविता भवत्याः मेलनं तैः । न कठिनो विधिस्तथा ।

**विद्योत्तमा**—सत्यस्य सरलतायाश्च निधयआसंस्ते । छलेन विरहिताः । धूर्त-पण्डितयोरुपजापसाधनमात्रं संवृत्तास्ते । नाऽहं छलिता ।

---

**इला**—राजकुमारि ! आप दुःखी न होइये । भवितव्यता बहुत बलवान् है । इसको कौन रोक सकता है ? आपने अपने पति को खोजने का कौन सा प्रयत्न नहीं किया ? सारे भारतवर्ष में हमारे गुप्तचर घूम रहे हैं । आप भी मेरे साथ रथ पर चढ़कर अनेक परिचित और अपरिचित स्थानों पर घूमी हैं । अन्य भी स्थानों पर जाना चाहती हैं ।

**विद्योत्तमा**—इले ! यह तुमने सत्य कहा है ।

**इला**—राजकुमारि ! निरन्तर अतीत का स्मरण करने से क्या लाभ है ? मेरा मन तो कहता है, कोई कानों में जप सा रहा है कि आपका उनके साथ मिलन अवश्य होगा ।

**विद्योत्तमा**—वे सत्य और सरलता के प्रतीक थे । वे छल से रहित थे । वे तो उन धूर्त पण्डितों के षड्यन्त्र के साधनमात्र बन गये थे । उन्होंने मुझको ठगा नहीं था ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इला**—राजपुरुषैः निगृहीतौ तौ धूर्तपण्डितौ । अङ्गीकृतस्ताभ्यां स्वकीयोऽपराधः । किन्त्वपराधानुरूपं न दण्डितौ । केवलम्... ।

**विद्योत्तमा**—आम् । सर्वस्वापहारेण देशान्निर्वासितौ । शास्त्रेषु निषिद्धो हि ब्राह्मणानां वधः । कठोरतमो दण्डोऽयमेव स्मृतिषु, यदेते घोरापराधिनो भवन्तः सर्वस्वापहारेण देशान्निर्वास्येयुः ।

**इला**—तथ्यमेवोच्यते भवत्या ।

**विद्योत्तमा**—परं-दण्डितयोरपि तयोः किं मे दुःखस्य प्रतिकारो भवति ?

**इला**—राजकुमारि ! सरस्वत्यनुग्रहविरहितेऽपि भवत्याः प्राणनाथे तस्य समुज्ज्वलं स्पृहणीयं रूपं सरलं च मनः स ततं स्मर्यते । न च तत् क्वापि दृग्गोचरीभवति । करियेति नाम्ना प्रसिद्धोऽपि वपुषाऽभिरामः मनसा च निर्मलः कस्य न हृदयं वशीकरोति ?

---

**इला**—उन धूर्त पण्डितों को राजसेवकों ने पकड़ लिया था । उन्होंने अपना अपराध स्वीकार कर लिया । परन्तु उनको अपराध के अनुरूप दण्ड नहीं मिला । उनको तो केवल... ।

**विद्योत्तमा**—हां, उनके धन का अपहरण करके देश से निर्वासित कर दिया गया । शास्त्रों में ब्राह्मणों के वध का निषेध है । उनके लिये सबसे कठोर दण्ड यही है कि उनका सारा धन छीन कर देश से बाहर निकाल दिया जावे ।

**इला**—आप ठीक कहती हैं ।

**विद्योत्तमा**—परन्तु पण्डितों को दण्ड देने से मेरे दुःख का तो प्रतीकार नहीं हुआ ।

**इला**—राजकुमारि ! यद्यपि आपके प्राणनाथ पर सरस्वती देवी ने कृपा नहीं की और वे भारती से विभूषित नहीं हुए थे, तथापि उनका सौन्दर्य अति उज्ज्वल और स्पृहणीय था । मन सरल था । इस प्रकार का उज्ज्वल रूप कहीं दिखाई नहीं देता । नाम से करिया होते हुये भी शरीर से सुन्दर और मन से निर्मल थे । वे किसके मन को वशीभूत नहीं कर सकते ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—न हि करिया, कालिदास इति वक्तव्यम्। किं ते विस्मृता सा घटना, यदा...।

**इला**—न हि, न हि राजकुमारि! कथमिव सा विस्मर्यते, यदा कालिदास-महोदयानां जननी...।

**विद्योत्तमा**—स्वसुतं नगरेऽन्वेषयन्ती इहागता। वत्स करिया, पुत्र कालिदास इति कुररीव आक्रोशमाणा राजपथेषु महापथेषु वीथिषु परिस्खलन्ती करुणं च क्रन्दन्ती परिभ्रमति स्म।

**इला**—नगररक्षिणस्तां सादरमत्रानयन्। अहो सौन्दर्यशोभिनी गौरवशालिनी कान्तिमती तेजस्विनी ममतामयी सा मुखाकृतिः। किं सा कदापि विस्मर्तुं शक्यते? सा भवत्याः...।

**विद्योत्तमा**—सा एव तेषां जननी, मम च श्वश्रूः। तेषां नैयायिकाशिवदास-महोदयानां सहधर्मिणी, ये अनेकशः राजसभायामस्माभिः सम्मानिताः। गौरवान्विताऽहं तया।

---

**विद्योत्तमा**—करिया नहीं, कालिदास कहो। क्या तुमको वह घटना भूल गई, जबकि...।

**इला**—नहीं नहीं राजकुमारि! वह घटना मैं कैसे भूल सकती हूँ, जबकि उन कालिदास की माता...।

**विद्योत्तमा**—नगर में अपने पुत्र को खोजती हुई यहाँ आई थीं। पुत्र करिया! पुत्र कालिदास! इस प्रकार कुररी के समान चिल्लाती हुई नगर के राजमार्गों, महापथों और गलियों में लड़खड़ाती हुई करुण रुदन करती भटक रही थीं।

**इला**—नगर के रक्षक उनको सादर हमारे पास ले आये। अहो! वह गौरशालिनी, तेजस्विनी, ममतामयी मुखाकृति। उसको कभी क्या भूला जा सकता है? वे आपकी...।

**विद्योत्तमा**—हाँ। वे इनकी माता और मुझ अभागिनी की सास थीं। वे उन नैयायिक शिवदास महोदय की सहधर्मिणी थीं, जिनका हमारी राजसभा में अनेक बार सम्मान किया गया। मैं उनसे गौरवान्वित हूँ।

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इला**—अथ च ज्ञापितं तया—कालिदासस्तस्या एव सुतः। स्नेहेन करियेति पदव्यवहारः। शैशवे कुशाग्रबुद्धिरपि स आयुषस्तृतीये वत्सरे पितरि दिवंगते भूमिनिपतनाघातेन जडबुद्धित्वमवाप। राजकुमारि! श्रूयते आघातेन जाड्यमुपगता बुद्धिः पुनरपि सचेतनतामावहति।

**विद्योत्तमा**—श्रुतं तु मयाऽपि। परमत्र कश्चित् कुशलमतिः चिकित्सक एव सत्यं तथ्यं बोधयितुं क्षमः। अस्तु, किं कथयानि?

**इला**—परमनैयायिकं शिवदासमधिकृत्य किमपि...।

**विद्योत्तमा**—दिवं प्रयाते तस्मिन् न्यायशास्त्रविदि विशीर्णानि परिवारस्य आयसाधनानि। कृत्रिमस्नेहिनो मृषानुरागाः मित्रसम्बन्धिनोऽपि परावर्तित-वदनाः बभूवुः। जननी कथमपि महान्ति दुःखानि पीडाः विपदश्च सोढ्वा स्वल्पवयसमपत्यं पालयति पोषयति च। स च सौन्दर्यतारुण्यविभूषितोऽपि जडबुद्धिरेवावर्तत।

---

**इला**—उन्होंने बताया था कि कालिदास उनके ही पुत्र थे। वे प्रेम से उनको करिया कह कर पुकारा करती थीं। शैशव-काल में वे कुशाग्र-बुद्धि थे। तीन वर्ष का होने पर पिता की मृत्यु के बाद भूमि पर गिर कर चोट लग जाने से उनकी बुद्धि जड़ हो गई। राजकुमारि! सुना है कि आघात होने से जड़ हुई बुद्धि पुनः सचेतन हो सकती है?

**विद्योत्तमा**—सुना तो है मैंने भी। परन्तु इस विषय में कोई कुशल चिकित्सक ही ठीक-ठीक बता सकता है। हाँ, तो मैं कह रही थी...।

**इला**—परम नैयायिक शिवदास के सम्बन्ध में।

**विद्योत्तमा**—उन नैयायिक शिवदास के स्वर्ग चले जाने पर परिवार की आय के साधन समाप्त हो गये। कृत्रिम और झूठा स्नेह दिखाने वाले इष्ट-मित्र-सम्बन्धियों ने मुख फेर लिये। माता ने किसी प्रकार महान् दुःख, पीडा, विपत्ति और कष्ट सहन करके छोटे बालक का पालन किया। कालिदास सौन्दर्य से विभूषित तो हो गये, परन्तु बुद्धि से जड़ ही रहे।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इला—निर्धनत्वेन दैन्येन च विवशीकृतेन तेन वनं गत्वा काष्ठानि छित्वा आपणेषु विक्रीय स्वस्य मातुश्च जीवनयापनस्य साधनानि संयोज्यन्ते ।

विद्योत्तमा—राज्याधिकारिभ्यो, विशेषतस्तु नरपालाय अतिलज्जाकरमेतद् यद् विद्वांसो दैन्यमावहेयुः, दिवंगते च तेषां निराश्रयाः परिवाराः दारिद्रयपीडिताः विचेष्टन्ताम् । ते जीवनयात्रासम्पादनहेतोरपि धनेभ्यः स्पृहयेयुः ।

इला—राजकुमारि ! महाराजस्य सामयिकमेवोद्‍घोषणम् । राज्ये न कोऽपि विद्वान् पण्डितो जीविकाहेतोः चिन्तितो भविष्यति । विद्वांसो राजकीय-मनुदानं लप्स्यन्ते । तदनन्तरं तेषां परिवाराणां च परिपालनमपि राजकीयमुत्तरदायित्वम् ।

विद्योत्तमा—परमियं घोषणा तु कालमपेक्षते । सस्येषु शुष्केषु हिनीरसेषु घनागमैः किं जलवर्षणैः किम् ?

---

इला—परिवार की निर्धनता के कारण ही विवश होकर वे वन में जाकर, लकड़ी काट कर और बाजार में बेच कर अपने और माता के जीवन-यापन के साधन जुटाते थे ।

विद्योत्तमा—राज्य के अधिकारियों के लिये, विशेष रूप से राजा के लिये कितनी लज्जा की बात है कि किसी विद्वान् के स्वर्गवासी हो जाने पर उसका आश्रित परिवार निर्धनता से दुःखी होकर जीवन-यात्रा के लिये धन की स्पृहा करे ।

इला—राजकुमारि ! महाराज ने तो यह सामयिक घोषणा कर दी है कि हमारे राज्य में कोई भी विद्वान् पण्डित जीविका के लिये दुःखी या चिन्तित नहीं होगा । विद्वानों को राजकीय अनुदान मिलेगा । दुर्भाग्यवश किसी विद्वान् के स्वर्गवासी हो जाने पर उसके परिवार के पालन का उत्तरदायित्व राज्य का होगा ।

विद्योत्तमा—परन्तु यह घोषणा तो समय की अपेक्षा रखती है । धान्यों के सूख जाने पर वर्षा से क्या लाभ है ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इला**—राजकुमारि ! सत्यमुक्तं भवत्या । परं श्रीमतः कालिदासस्य जनन्या तु... ।

**राजकुमारि**—स्वाभिमानगुणविभूषिता सा । मानमहद्भिर्याचनया न गौरवं लघूक्रियते । सा नाङ्गीकृतवती कांचिदपि सेवामस्माकम् ।

**इला**—परं तस्याः हृदयं वात्सल्येन स्नेहेन च परिपूर्णम् ।

**विद्योत्तमा**—तया खलु मे दोषा अपराधाश्च नावलोकिताः । उक्तं च तया स्थितिस्त्वेषा स्वाभाविकी । आकृष्य मां स्नेहेन स्वाङ्के कपोलौ च परिचुम्ब्य तयाऽहमात्मजेव स्नेहार्द्रीकृता । अविस्मरणीयं तत्स्नेहचुम्बनं मे जीवनालम्बनम् ।

**इला**—ततश्च गता तत्रभवती ।

**विद्योत्तमा**—गता सा । अस्मान् परित्यज्य गता । किमप्यनुक्त्वैव गता । तत्र-

---

**इला**—राजकुमारि ! आप ठीक कहती हैं । परन्तु श्रीमान् कालिदास की माता ने तो... ।

**विद्योत्तमा**—वे बहुत स्वाभिमानिनी हैं । स्वाभिमानी जन याचना करके अपने गौरव को लघु नहीं करते । उन्होंने हमारी सेवा स्वीकार नहीं की ।

**इला**—परन्तु उनका हृदय आपके प्रति वात्सल्य से भरा हुआ था ।

**विद्योत्तमा**—उन्होंने मुझ में दोष नहीं देखा । सारे वृत्तान्त को सुन कर उन्होंने कहा कि ऐसी स्थिति स्वाभाविक थी । मुझको अपनी गोदी में खींचकर और प्रेम से कपोलों का चुम्बन करके उन्होंने मुझको पुत्री के समान स्नेह दिया । उनका वह अविस्मरणीय स्नेह-चुम्बन मेरे जीवन का आलम्बन है ।

**इला**—उसके बाद वे चली गईं ।

**विद्योत्तमा**—वे चली गईं । हमको छोड़ कर चली गईं । कुछ कहे बिना ही । वे

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवती कथयति स्म मे श्वश्रूः—मयैवान्वेषणीयो मदीयः सुतः। एकस्मिन् प्रभाते नावालोक्यत सा। नाधिगतोऽस्माभिस्तत्रभवत्याः वृत्तान्तः।

**इला**—राजकुमारि ! परं ममान्तः करणं प्रमाणयति, भवती स्वप्राणनाथं श्वश्रूं चाचिरेणैव द्रक्ष्यति। अन्तःकरणप्रवृत्तयः सामान्येन भविष्यद्घटनानामनुमानं कारयन्त्येव।

**विद्योत्तमा**—(इलां समीपमाकृष्य कपोलं च परिचुम्ब्य) घृतेन स्नातु भवद्रसना। प्रियसखि इले ! स्नेहमयि ! शोभने ! विदधातु विधिः सत्यं तद्भवं शोभनं वचः।

**इला**—इयं तु मयि भवत्याः महती अनुकम्पा।

**विद्योत्तमा**—इले !

**इला**—राजकुमारि !

---

कहती थीं कि हम अपने पुत्र की खोज स्वयं करेंगी। एक प्रातःकाल वे नहीं थीं। हमने हजारों प्रयत्न करके भी उनका समाचार नहीं पाया।

**इला**—राजकुमारि ! मेरा अन्तःकरण कहता है कि आप अपने पति और सास को शीघ्र देखेंगी। अन्तःकरण की प्रवृत्तियाँ सामान्य रूप से भविष्य की घटनाओं का अनुमान करा देती हैं।

**विद्योत्तमा**—(इला को अपने समीप खींचकर और उसके कपोल का चुम्बन करके) तुम्हारे मुख में घी-शक्कर। प्रिय सखि इले ! स्नेहमयि शोभने इले ! विधाता तुम्हारे इस शोभन वचन को सत्य करे।

**इला**—यह तो आपकी मुझ पर महती अनुकम्पा है।

**विद्योत्तमा**—इले !

**इला**—राजकुमारि !

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—यद्यहं तदानीं ते परामर्शङ्गीकृत्य रोषं परित्यज्य निकृतिम-विगणय्य तेषां शिक्षायाः समुचितप्रबन्धमकरिष्यम्... ।

**इला**—भवत्याश्चित्ते शान्तिक्षोभभेदुः खपीडादिभावानां न तथाऽधिकारोऽभविष्यत् । परं यदतीतं तद् व्यतीतम् । तदर्थमलं परितप्य । बलवती खलु भवितव्यता । भवती तु विदुषी, अनेकेषु शास्त्रेषु चाधिगतपरमार्था । मनीषिणः नानुशोचन्ति व्यतीतम् । प्रकृतौ यत् घटते तत् लोककल्याणायैव भवति ।

**विद्योत्तमा**—सत्यमिदं ते वचनम् । परं प्रचण्डविरहानलजनितशोको विद्यां बुद्धि धैर्यमिति सर्वमेव पराभवति ।

**इला**—राजकुमारि ! अलमेतेन प्रसङ्गेन । अत्यन्तं दूयते भवत्याः हृदयमेताभिः वार्ताभिः । अपि च कालिदासाभिधः कश्चिन्महाकविः बहुचर्चित इत्यनुश्रुतिः ।

---

**विद्योत्तमा**—यदि मैं तुम्हारे परामर्श को मान कर और क्रोध को छोड़ कर उनकी शिक्षा का समुचित प्रबन्ध कर देती ?

**इला**—तो आपके मन में अशान्ति, क्षोभ, शोक, दुःख, पीड़ा आदि भावों का इतना अधिकार न होता । परन्तु जो बीत गया, वह बीत गया । उसके लिये दुःखी न होइये । भवितव्यता निश्चय से बलवान् है । आप विदुषी हैं और अनेक शास्त्रों में निष्णात हैं । मनीषी जन बीती बातों पर शोक नहीं करते । प्रकृति की घटनायें जन-कल्याण के लिये ही होती हैं ।

**विद्योत्तमा**—तुम्हारा यह वचन ठीक है । परन्तु प्रचण्ड विरह-जनित शोक विद्या और बुद्धि दोनों को पराभूत कर देता है ।

**इला**—राजकुमारि ! इस प्रसङ्ग को बन्द कर दीजिये । इनसे आपके हृदय को अधिक पीड़ा होती है । और भी, सुना जाता है कि कालिदास नाम के किसी कवि की बहुत चर्चा है ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—आम् । कविताक्षेत्रे आह्लादकरः सुधाकरोऽभ्युदितः । तस्य कीर्तिराप्याययति मे श्रोत्रे । पठिता मया अनेकाः कविताः ।

**इला**—वाढम् ।

**विद्योत्तमा**—तास्तु कविताः सरस्वत्यैव कवेः लेखन्या अग्रभागं प्रविश्य विरचिताः विभान्ति ।

**इला**—भवत्याः नाथोऽपि कालिदासाभिधानः ?

**विद्योत्तमा**—सखि ! असम्भवं परिकल्प्य न मे हृदयं परितापनीयम् । क्व साक्षात्सरस्वत्याः वरदपुत्रो महान् कविः कालिदासः, क्व च विद्यया शून्यो वराको ग्राम्यःकाष्ठभारिकः ?

**इला**—राजकुमारि ! तस्य महाकवेः ऋतुसंहारनामकः कवितासंग्रहोऽतीव प्रशस्यते जनैः ।

---

**विद्योत्तमा**—हाँ । कविता के क्षेत्र में एक आनन्द देने वाले चन्द्रमा का उदय हुआ है । मेरे कान उनकी कीर्ति से आप्यायित हो गये हैं । मैंने उनकी अनेक कवितायें पढ़ी हैं ।

**इला**—अच्छा ?

**विद्योत्तमा**—वे कवितायें मानो सरस्वती देवी ने ही उनकी कलम के अग्र भाग में प्रविष्ट होकर लिखी हैं ।

**इला**—आपके पतिदेव का नाम भी तो कालिदास है ?

**विद्योत्तमा**—असम्भव की कल्पना करके मेरा चित्त न दुःखाओ कहां तो साक्षाद् सरस्वती के वरद पुत्र महान् कवि कालिदास और कहाँ वे विद्या से शून्य बेचारे ग्राम्य लकड़हारे ?

**इला**—राजकुमारि ! इन महाकवि के 'ऋतुसंसार' नामक काव्य-संग्रह की लोग बहुत प्रशंसा करते हैं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्योत्तमा—महाकवेः कृतयस्तु बहुश्रमधनव्ययेन मया उज्जयिनीत उपानीय पठिताः ।

इला—परमेतद् विषये नाऽहं कदापि... ।

विद्योत्तमा—आम् । सर्वेभ्य एव संगोपितं मया । किमधिकम्, प्राणेभ्योऽपि गरीयसी, स्नेहस्य एकमात्रं भाजनं प्रिया मे सखी इला, ततोऽपि सँगोप्य हृदयस्यैकस्मिन् कोणे प्रतिष्ठापितमेतद् रहस्यम् । परन्तु उद्घाटिते तस्मिन् रहस्येऽहं सर्वास्ताः कृतीस्तुभ्यं दर्शयाम्येव ।

इला—राजकुमारि ! कथमहमधिगमिष्यामि भवत्स्नेहस्यानृण्यम् ?

विद्योत्तमा—(उच्चस्वरेण) इरावति !

इरावती—(प्रविश्य प्रणम्य) आज्ञापयतु राजकुमारी ।

---

विद्योत्तमा—मैंने महाकवि की कृतियों को बहुत धन व्यय करके उज्जयिनी से मंगाया है ।

इला—परन्तु इस विषय में आपने मुझसे कभी कुछ नहीं... ।

विद्योत्तमा—हाँ । इस बात को मैंने सभी व्यक्तियों से छिपाया है । और अधिक क्या कहूँ, मेरी प्राणों से भी प्रिय, स्नेह की एकमात्र पात्र प्रिय सखी इला है । उससे भी छिपा कर हृदय के एक कोने में ही यह रहस्य प्रतिष्ठित कर रखा था । परन्तु जबकि यह रहस्य तुम्हारे समक्ष खुल गया है, तो मैं सारी रचनायें तुमको दिखाऊँगी ही ।

इला—राजकुमारि ! मैं आपके स्नेह से कैसे उऋण होऊँगी ?

विद्योत्तमा—(उच्च स्वर से) इरावति !

इरावती—(प्रवेश करके और प्रणाम करके) राजकुमारि ! आदेश करें ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri.Gyaan Kosha

**विद्योत्तमा**—इरे ! गच्छ । मम शयनकक्षे मञ्चिकायां कानिचित् पुस्तकानि वर्तन्ते । सत्वरमानय तानि । लघुमञ्चिकामप्येकामानय ।

**इरावती**—यदाज्ञापयति राजकुमारी । (बहिर्गच्छति) ।

**विद्योत्तमा**—इले ! निश्चयेन त्व ताः रचना अवलोक्य रसास्वादनसमुद्भवमानन्दमनुभविष्यसि ।

**इला**—राजकुमारि ! असंशयं ताः कविताः रसानां भावानां च पीयूषद्रवरसैः सिक्ताः यतः राजकुमार्या अपि विवेचनात्मकदृष्ट्या प्रशंस्यन्ते ।

**विद्योत्तमा**—वस्तुतः प्रशंसनीयाः ।

(इरावती कानिचित् पुस्तकानि लघुमञ्चिकामानीय प्रविशति) ।

**विद्योत्तमा**—इरे ! मत्समीपं लघुमञ्चिकां निधाय तदुपरि स्थापय एतानि पुस्तकानि ।

(इरावती तथैव कृत्वा बहिर्गच्छति)

---

**विद्योत्तमा**—इरे ! जाओ । मेरे शयन-कक्ष में मञ्चिका पर कुछ पुस्तकें रखी है । उनको शीघ्र ले आओ । एक छोटी मञ्चिका भी लाना ।

**इरावती**—राजकुमारी का जो आदेश है । (बाहर जाती है) ।

**विद्योत्तमा**—इले ! उन रचनाओं को देखकर तुम अवश्य रस-आस्वाद के आनन्द का अनुभव करोगी ।

**इला**—राजकुमारि ! निश्चय ही वे रचनायें रस और भावों के अमृत रस से सिञ्चित होंगी, जो राजकुमारी भी विवेचनात्मक दृष्टि से उनकी प्रशंसा कराती हैं ।

**विद्योत्तमा**—वास्तव में वे प्रशंसा के योग्य हैं ।

(इरावती कुछ पुस्तकें और एक छोटी मञ्चिका लेकर आती है)

**विद्योत्तमा**—इरे ! मेरे समीप इस छोटी मञ्चिका को रखकर उसके ऊपर इन पुस्तकों को रख दो ।

(इरावती वैसे ही करके चली जाती है ।)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—(एकं पुस्तकमादाय) अयम् ऋतुसंहारनामकः कवितासंग्रहः। मया सम्प्रत्येवास्यचर्चाऽकृता। अत षड्ऋतूणां हृदयाकर्षकं वर्णनं, विशेष तस्तु वसन्तवर्णनं बलान्मनसो समावर्जकम्।

**इला**—राजकुमारि ! सत्यमेवैताः कवितास्तथाविधाः रससम्भृताः हृदय-हारिण्यश्च ?

**विद्योत्तमा**—सत्यमेव। एनं सरसं श्लोकं शृणु—

> कर्णेषु योग्यं नवकर्णिकारं चलेषु नीलेष्वलकेष्वशोकम्।
> पुष्पं च फुल्लं नवमल्लिकायाः प्रयान्ति कान्तिं प्रमदाजनानाम्॥
> स्तनेषु हाराः सितचन्दनार्द्राः भुजेषु सङ्गं वलयाङ्गदानि।
> प्रयान्त्यनङ्गातुरमानसानां नितम्बिनीनां जघनेषु काञ्च्यः॥

**इला**—अहो वसन्ततोः महिमा ?

**विद्योत्तमा**—गीतानीमानि पठन्त्याः मनसि का अपि अनिर्वचनीयाः भावनाः

---

**विद्योत्तमा**—(एक पुस्तक लेकर) यह 'ऋतुसंहार' नाम का कविता-संग्रह है। इसका तुमने अभी ही उल्लेख किया है। इसमें ६ ऋतुओं का हृदयग्राही वर्णन है। विशेष रूप से वसन्त का वर्णन मन को बलपूर्वक आकृष्ट करता है।

**इला**—राजकुमारि ! क्या सत्य ही ये कवितायें इतनी रस से भरी हुई और हृदय-ग्राही हैं ?

**विद्योत्तमा**—हां ! एक सरस पद्य के भावों को सुनो—

> श्रुति आभूषित कर्णिकार से कुन्तल चपल अशोकों से।
> प्रमदाओं की कान्ति निराली नवमलिका के फूलों से॥
> चन्दन-चर्चित कुच हारों से बाहें कङ्गन-वलयों से।
> मिलनातुर वनितायें चलतीं कटि भूषित कर करधनि से॥

**इला**—अहो ! वसन्त ऋतु की महिमा ?

**विद्योत्तमा**—इन गीतों को पढ़ कर मन में न जाने कैसी अनिर्वचनीय भावनायें

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समुद्द्रवन्ति । अनेकशः पठन्ती अहमनुभवामि, कविना रचना एता विरचिताः केवलं मामुद्दिश्य ।

**इला**—कविना गीतान्यन्यान्यपि विरचितान्येव ?

**विद्योत्तमा**—सत्यम् । श्रूयते कविरेकस्य अन्यस्यपि गीतिकाव्यस्य रचनायां संलग्नः । अपूर्णेऽपि तस्मिन् कतिपयानि पद्यानि अतिशयेन प्रथितानि । मन्दाक्रान्ताछन्दसि निबद्धानि तानि लोकगीतानीव गीयन्ते जनैः ।

**इला**—गीतिकाव्येऽस्मिन् किं वर्णितं कविना ?

**विद्योत्तमा**—कश्चित् कान्ताविरहितो यक्ष आषाढमासे वियति समुन्नतान् मेघान् वीक्ष्य विरहगुरुणा व्यथातिभारेण विह्वलो विरह विह्वलायै प्रियायै हृदयान्तर्गताः वेदनाः तानेव जीमूतान् दूतीकृत्य प्रेषयति ।

---

उमड़ने लगती हैं । अनेक बार ऐसा लगता है कि कवि ने इन कविताओं को मुझको ही लक्ष्य करके लिखा है ।

**इला**—कवि ने अन्य गीत भी रचे होंगे ?

**विद्योत्तमा**—सत्य है । सुना जाता है कि महाकवि एक अन्य गीत काव्य की रचना कर रहे हैं । यद्यपि वह पूरा नहीं हुआ है, तो भी कुछ पद्य बहुत प्रसिद्ध हो गये हैं । मन्दाक्रान्ता छन्द में निबद्ध इन पद्यों का लोग लोकगीतों के समान गान करते हैं ।

**इला**—इस गीत काव्य में कवि ने किसका वर्णन किया है ?

**विद्योत्तमा**—कोई यक्ष अपनी प्रियतमा से बिछुड़ गया है । आषाढ मास में आकाश में उमड़ते मेघों को देखकर विरहजनित पीड़ा से व्यथित होकर वह यक्ष विरहव्यथिता प्रियतमा के लिये मेघों को ही दूत बना कर सन्देश के रूप में हृदय की वेदनायें भेजता है ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इला**—तस्य गीतमपि किञ्चित् श्रावणीयम् ।

**विद्योत्तमा**—यक्षिण्याः सौन्दर्याभिव्यञ्जने कवेरत्युद्भुताऽनिवर्चनीया प्रतिभाऽभिव्यज्यते । नारीसौन्दर्यस्यायमादर्शः श्लोकः—

> तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
> मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।
> श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
> या तत्र स्याद् युवतिविषते सृष्टिराद्येव धातुः ॥

**इला**—नारीसौन्दर्यस्य इयमभिव्यक्तिः बध्नात्येव चित्तम् ।

**विद्योत्तमा**—सौन्दर्यस्याभिव्यञ्जनेन सहैव यक्षप्रियायास्तस्याः विरहव्यथा मर्मवेधिनी—

> उत्सङ्गे वा मलिनशयने सौम्य निक्षिप्य वीणां
> मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।

---

**इला**—उसका कोई गीत सुनाने की कृपा करें ।

**विद्योत्तमा**—यक्षिणी के सौन्दर्य की अभिव्यञ्जना में कवि की अद्भुत प्रतिभा व्यंजित हुई है । नारी-सौन्दर्य का यह आदर्श है—

> श्याम लता तन दन्त शिखर से अधर लाल बिम्बीफल जैसे
> पतली कटि है नाभी गहरी आँखें डरी मृगी सी भय से ।
> अलसाई गति गुरु नितम्ब कुछ कुछ नमती स्थूल कुचों से
> तन्वी विधि की सृष्टि अनोखी पटु रचना पहली नारी की ॥

**इला**—नारी-सौन्दर्य की यह अभिव्यक्ति हृदय को बांध देती है ।

**विद्योत्तमा**—सौन्दर्य की अभिव्यक्ति के साथ ही उस यक्ष-प्रिया की विरह-व्यथा मर्म को बीध डालती हैं—

> मलिन पहन कर वसन अङ्क में सौम्य जलद ! वीणा को रखकर
> मेरे नामाङ्कित गीतों को स्वयंरचित गाने को उत्सुक ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चिद्
भूयो भूयः स्वयमपि कृतां मूर्छनां विस्मरन्ती ॥

**इला**—विप्रलम्भशृङ्गाररसाभिव्यञ्जकोऽयं भावगरिमा सहृदयहृदयानि कोमलकान्तभावैः विह्वलयितुंक्षमते ।

**विद्योत्तमा**—प्रियायाः प्रगाढाननुमेयानुरागपारावारपयसि निमग्नः यक्षः। नास्त्यस्यानुरागस्य कश्चिदवधिः। अरण्यस्य सर्वास्ववस्थासु सर्वेषु वस्तुष प्रियासौन्दर्यस्यास्तित्वमनुभूयते तेन—

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हपाशेषु केशान्।
उत्पश्यामि प्रतनुषु लतावीचिषु भ्रूविलासान्

पर क्व सा जीवितसौन्दर्यपरम्परा क्व चारण्यस्य निर्जीवं सौन्दर्यम्। एकपद एव तेन गीयते—

---

नयनों से झरती बूंदों से भीगी तन्त्री किसी तरह भी
पोंछ स्वयं भी रची मूर्छनों के स्वर बारंबार विसरती ॥

**इला**—विप्रलम्भ श्रृंगार के रसास्वादक भावों की गरिमा हृदय को कोमल कान्त भावों से विह्वल बनाने में समर्थ है।

**विद्योत्तमा**—वह यक्ष अपनी प्रेयसी के प्रगाढ़ और अनुमेय स्नेह-समुद्र में डूबा हुआ है। अनुराग की कोई सीमा नहीं है। वन की सभी अवस्थाओं तथा वस्तुओं में वह प्रिया के ही सौन्दर्य का अस्तित्व अनुभव करता है—

श्याम-लता में अङ्ग, चितवनें हरिणी के चंचल नयनों में
शशि में आनन की उज्ज्वलता केश मयूरों के बर्हों में।
भ्रू-विलास तेरे नदियों की कुटिल लहरियों में लखता हूँ

परन्तु कहाँ तो वह जीवन्त सौन्दर्य और कहाँ वह वन की निर्जीव सुषमा ? सहसा वह गा उठता है—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हन्तैकस्मिन्क्वचिदपि न ते चण्डि सादृश्यमस्ति ॥

**इला**—(चक्षुषो समुद्द्रवन्त्यश्रूणि प्रोञ्छ्य) राजकुमारि ! पद्यान्येतानि निशम्य मन्ये, हृदयमेवं विगलितं भूत्वा नयनमार्गेण बहिः निस्सर्तुं प्रयतते। सत्यमेव कविः विरहवेदनया स्वयमेवाभिभूतः । भावा इमे कवेरन्तर्मनसः किमपि गूढावरणमपवृण्वन्तः प्रस्फुटीभवन्ति ।

**विद्योत्तमा**—(अश्रूणि प्रोञ्छ्य) इले ! पद्यानीमानि मामेव विरहविह्वलांयक्षिणीमनुभावयन्ति । सत्यं, स ग्राम्यः कालिदास एव विरही यक्षो मे प्रियतमः । मन्ये, कविना आवयोरेव विरहव्यथा प्रकटिता स्वकविताभिः । न जाने...

(उत्तरीयेण अश्रूणि पुनः प्रोञ्छति)

**इला**—राजकुमारि ! कविताभिरेताभिः यदि असह्या व्यथा क्षोभोऽशान्तिश्च

---

किन्तु खेद है तेरी समता नहीं कोपने ! कुछ पाता हूँ ॥

**इला**—(आँखों में उमड़ते हुये आँसुओं की उत्तरीय से पोंछकर) राजकुमारि ! इन पद्यों को सुनकर मानो हृदय ही वह कर आँखों के मार्ग से बाहर आ जाना चाहता है । सत्य ही कवि स्वयं विरह की वेदना से अभिभूत है । ये भाव कवि के मन के गुप्त आवरण को विदीर्ण करके प्रस्फुटित हो रहे हैं ।

**विद्योत्तमा**—(आँसुओं को पोंछ कर अवरुद्ध स्वर में) इले ! इन पद्यों को पढ़ कर लगता है कि वह विरहिणी यक्षिणी मैं ही हूँ । वह ग्राम्य लकड़हारा कालिदास ही मेरा प्रियतम यक्ष है । कवि ने इस कविता की रचना में हम दोनों की ही विरह-व्यथा को अभिव्यक्त किया है । न जाने...

(उत्तरीय से आँसू पोंछती हैं)

**इला**—राजकुमारि ! यदि इन कविताओं से हृदय में इतनी पीड़ा, अशान्ति और

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हृदयेऽनुभूयते, अलमेतेन प्रसङ्गेन। अन्यदा कदाचिद् रसास्वादो भविता।

**विद्योत्तमा**—न हि, न हि, इले ! नैषा वार्ता। एताभिर्ममान्तर्मनसि सुखानुभूतिरव। हृदयमपि द्रवयितुं समर्थाः कविता एताः मां शान्तिमनिर्वचनीयामनुभावयन्ति। तिरोभवन्ति तदानीं सर्वा अन्या अनुभूतयः। अहो विरहविह्वलः स यक्ष...।

**इरावती**—(प्रविश्य) राजकुमारि ! समुपस्थितेयं भोजनवेला। महाराज्ञी प्रतीक्षते भोजनशालायाम्।

**विद्योत्तमा**—इरावति ! गच्छ। निवेदय जनन्यै, न बाधते मां बुभुक्षा। किञ्चित्कालानन्तरं स्वयमेवागमिष्यामि।

(इरावती गच्छति)

**इला**—राजकुमारि ! श्रुतं मया, कविना कानिचिन्नाटकान्यपि विरचितानि।

---

क्षोभ होता है, तो इस प्रसङ्ग को बन्द कर दीजिये। यह रसास्वादन और कभी हो जावेगा।

**विद्योत्तमा**—नहीं, नहीं इले ! यह बात नहीं है। इनसे मुझको अन्तर्मन से सुख ही मिलता है। हृदय को द्रवित करने में समर्थ इन पद्यों से मैं अनिर्वचनीय शान्ति का अनुभव करती हूँ। तब अन्य सभी अनुभूतियाँ तिरोहित हो जाती हैं। अहो ! वह विरह से विह्वल यक्ष...।

**इरावती**—(प्रवेश करके) राजकुमारि ! भोजन का समय हो गया है। महारानी भोजनशाला में आपकी प्रतीक्षा कर रही हैं।

**विद्योत्तमा**—इरावति ! जाओ। माता जी से कहना कि अभी मुझको भूख नहीं है। कुछ समय बाद अपने आप आ जाऊँगी।

(इरावती जाती है)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इला**—राजकुमारि ! मैंने सुना है कि कवि ने कुछ नाटक भी लिखे हैं।

**विद्योत्तमा**—आम्, इले ! तस्य नाटकद्वयं मया संगृहीतम् । (एक पुस्तकमादाय) एतन्नाटकं मालविकाग्निमित्रम् । अत्र शुङ्गवंशिनः सम्राजः पुष्यमित्रस्य पुत्रोऽग्निमित्रो नायकः ।

**इला**—मालवप्रान्तपतिः स एवाग्निमित्रः, विदिशा यस्य राजधानी ? दिवंगते पितरि मगधसाम्राज्यस्याधीश्वरोऽपि यो बभूव ?

**विद्योत्तमा**—अथ किम् । स एव । एषाऽपि प्रसिद्धिर्यत् स दिशः विजित्य अश्वमेधं जुहवाञ्चकार । स विक्रमादित्य इत्युपाधिनाऽपि आत्मानमलङ्चकार । (द्वितीयं पुस्तकमादाय) कवेरिदमन्यन्नाटकं विक्रमोर्वशीयमिति ।

**इला**—(पुस्तकमादाय) कदाचिन्नाटकेऽस्मिन्नुज्जयिनीसम्राजो विक्रमादित्यस्य पराक्रमाणां वर्णनं भवेत् ।

**विद्योत्तमा**—न हि । नाटकेऽस्मिन् पुरूवंशी सम्राट् पुरूरवा नायकः । इन्द्रसभायाश्चाप्सरा उर्वशी नायिका । पौराणिकीमेकां कथामाश्रित्य कविः

---

**विद्योत्तमा**—हां, इले ! उनके दो नाटक मेरे पास संगृहीत हैं । (एक पुस्तक को उठाकर) यह 'मालविकाग्निमित्र' है । इसमें शुंगवंशी सम्राट् पुष्यमित्र का पुत्र अग्निमित्र नायक है ।

**इला**—वही अग्निमित्र, जो मालव का प्रान्तपति था और विदिशा उसकी राजधानी थी ? पिता के स्वर्गवासी हो जाने पर वह मगध साम्राज्य का स्वामी हुआ ।

**विद्योत्तमा**—हां, वही अग्निमित्र । यह भी प्रसिद्ध है कि उसने दिग्विजय करके अश्वमेध यज्ञ किया था और विक्रमादित्य उपाधि धारण की थी । (दूसरी पुस्तक लेकर) यह कवि का दूसरा नाटक 'विक्रमोर्वशीयम्' है ।

**इला**—(पुस्तक को हाथ में लेकर) कहीं इस नाटक में उज्जयिनी के सम्राट् विक्रमादित्य के पराक्रमों का वर्णन है ?

**विद्योत्तमा**—इस नाटक का नायक पुरूवंशी सम्राट् पुरूरवा और नायिका इन्द्र की सभा की अप्सरा उर्वशी है । एक पौराणिक कथा को आधार बनाकर कवि ने

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नूतनान् भावान् रसांश्चोद्भावयति। नाटककथामूलं तु ऋग्वेदस्यापि दशममण्डलस्य उर्वशीसूक्तम्।

इला—परन्तु सम्राड् विक्रमादित्यः ?

विद्योत्तमा—नाटके यत्र तत्र महेन्द्रविक्रमपदयोः प्रयोगेणानुमीयते यत्कविरत्र सम्राजो विक्रमादित्यस्य तत्पितुः महेन्द्रस्यापि प्रशंसामभिव्यनक्ति।

इला---कवेः प्रतिभाऽध्ययनं च विलक्षणमेव।

विद्योत्तमा—वाढम्। इले ! सत्यमेवैतत्। नाटकमिदं शृङ्गाररसस्य शोभनमभिव्यञ्जनम्। नायिकायाः सौन्दर्यवर्णनं सर्वातिशायि मनोरमं हृदयहारि च।

इला—अहो ! स्वर्गस्य अप्सरा नायिका।

---

नये भावों और रसों की उद्भावना की है। नाटक के कथानक का मूल 'ऋग्वेद' के दशम मण्डल के उर्वशी सूक्त में भी है।

इला—परन्तु सम्राट् विक्रमादित्य...।

विद्योत्तमा—नाटक में जहाँ-जहाँ महेन्द्र और विक्रम पदों से अनुमान होता है कि कवि ने सम्राट् विक्रमादित्य और उनके पिता महेन्द्रादित्य का प्रशंशा को अभिव्यक्त किया है :

इला—कवि की प्रतिभा और विलक्षण है।

विद्योत्तमा—हा, इले ! यह सत्य है। इस नाटक में शृङ्गार रस की शोभन अभिव्यक्ति है। नायिका के सौन्दर्य का वर्णन सबको अतिशयित करने वाला, मनोरम और हृदयग्राही है।

इला—अहो ! स्वर्ग की अप्सरा नायिका...?

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—कविना लोकोत्तरजगतो युवती उर्वशी प्रत्यग्रसुरभितकुसुमस्तबकरमणीयलोभनीययौवनशालिनी नायिका कृता। अनुपमं तस्याः सौन्दर्यमलौकिकमेव। तच्च जगतः स्रष्टुः ब्रह्मणोऽपि रचनामतिशेते—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रोनु कान्तिप्रदः।
शृङ्गारैकरसः स्वयं न मदने मासो नु पुष्पाकरः।
वेदाभ्यासजड़ः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥

**इला**—अद्भूते रूपके इमे। एवंविधानामुच्चकोटिकानां रूपकाणां रचना न क्वचिदवलोक्यते। नाटकसंरचनायां तु कविः भासशूद्रकादीन् सकलानेव प्राचीननाटककारान् प्रतिभयाऽतिशेते।

**विद्योत्तमा**—कविरेकमन्यदपि नाटकँ विरचयति। प्रथमोऽङ्कस्तु विरचितः। (एकां लघु पुस्तिकामादाय) महता कष्टेन समुपलब्धं मयैतत्।

---

**विद्योत्तमा**—कवि ने इस नाटक में लोकोत्तर जगत् की युवती उर्वशी को नायिका बनाया है। वह ताजे सुगन्धित पुष्पगुच्छ के समान रमणीय तथा लोभनीय यौवन से भरी है। उसका अनुपम सौन्दर्य अलौकिक है। यह जगत् के स्रष्टा ब्रह्मा की रचना नहीं है।

कान्ति-प्रदाता शशि ही इसका निश्चय सिरजनहारा है
प्रेम-देवता कामदेव या चैत्रमास पुष्पाकर है।
वेदो को पढ़-पढ़ कर बुद्धि जड़ीभूत जिसकी होती
हाय विधाता ने कैसे यह रूप-सृष्टि रची होगी॥

**इला**—ये दोनों नाटक तो अद्भुत हैं। अभी तक ऐसे उच्च कोटि के नाटकों की रचना नहीं हुई है। नाटकों की रचना में कवि ने भास, शूद्रक आदि प्राचीन नाटककारों को अपनी प्रतिभा से अतिशयित कर दिया है।

**विद्योत्तमा**—कवि एक अन्य नाटक भी लिख रहे हैं। नाटक का प्रथम अङ्क उपलब्ध हुआ है। (एक छोटी पुस्तक उठाकर) अति कठिनाई से मैंने इसको पाया है।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इला—नाटकेऽस्मिन् का कथा ?

विद्योत्तमा—महाभारतस्योपाख्यानं शाकुन्तलं नवनाटकविधया वर्णितम् । नायिकायाः स्वाभाविकसौन्दर्यं प्रकृतिसौन्दर्यभावात्मकत्वमत्र सर्वातिशायिनी विशेषता । नायिका शकुन्तला मुग्धेन सौन्दर्येण हृदयस्य सरलैश्च भावैः सकलमेव भुवननारीसमुदायमतिशेते । महर्षेः कण्वस्य तपोवने वन्यानां तरूणां लतानां मृगाणां च मध्ये निवसन्त्यास्तस्याः सौन्दर्यं प्रकृतिपेलवम्—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥

इला—कविः नायिकायाः सौन्दर्यं लताभिरुपमाय तां प्रकृतिरूपिणीमेवाभिव्यनक्ति ।

विद्योत्तमा—सौन्दर्यप्रदीपकेभ्यो नागरिकजनसुलभवस्त्रालङ्कार वञ्चिताऽपि

इला—इस नाटक का कथानक क्या है ?

---

विद्योत्तमा—महाभारत के शकुन्तलोपाख्यान को एक नई विधा से लिखा है । नायिका का स्वाभाविक सौन्दर्य प्रकृति के साथ एक रूप करना इस नाटक की मुख्य विशेषता है । नायिका शकुन्तला अपने मुग्ध सौन्दर्य से और हृदय की सरलता से सभी नारियों में श्रेष्ठ है । महर्षि कण्व के तपोवन में वन्य वृक्षों, लताओं और मृगों के मध्य रहते हुये उसका सौन्दर्य प्रकृति का ही एक अंश है—

नव पल्लव का राग अधर में बाहों में वल्ली-मृदुता ।
अङ्गों में यह कुसुम गन्ध सा लोभनीय यौवन छाया ॥

इला—कवि ने नायिका के सौन्दर्य की उपमा लताओं से देकर उसको प्रकृति के रूप में ही अभिव्यक्त किया है ।

विद्योत्तमा—सौन्दर्य को उज्ज्वल करने वाले नागरिक-जन-सुलभ अलङ्कारों से रहित

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सा नैसर्गिकसौन्दर्यस्य स्वामिनी। वल्कलवस्त्रेषु सौन्दर्यमधिकमनोज्ञाता-मावहति--

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥

**इला**—अहो नारीणां सहजमुग्धकृत्रिमभूषणानलङ्कृतसौन्दर्याभिव्यञ्जने क्षमा कविप्रतिभा न शक्यते वर्णयितुं गिरा। तस्य काव्यस्य प्रशंसा तु...।

**विद्योत्तमा**--तपोवनतरोः कुड्मलरूपिणी शकुन्तला सखीभिः सह क्रीडन्ती, परिहसन्ती, आश्रमभूरुहो लताश्च सिंचन्ती क्रमशः यौवनेनापूर्यते। पुरुवंशीयः सम्राट् दुष्यन्तः मृगयाशीलस्तत् तपोवनं प्रविशति। सखीभ्यां

---

भी वह नैसर्गिक सौन्दर्य की स्वामिनी है। वल्कल-वस्त्रों में भी उसका सौन्दर्य निरख उठता है—

शैवल आवृत कमलों में भी रम्य मधुरता होती है
चन्द्र-बिम्ब से की मलिन चिह्न से सुन्दरता ही बढ़ती है।
वल्कल वसन पहन तन्वङ्गी अधिक मनोहर लगती है
मधुराकृतियाँ आभूषण की नहीं अपेक्षा रखती हैं।

**इला**—अहो नारी के सहज, मुग्ध और अनलङ्कृत सौन्दर्य की अभिव्यञ्जना में समर्थ कवि की प्रतिभा का शब्दों में वर्णन नहीं किया जा सकता। उसकी काव्य-रचना की प्रशंसा तो...।

**विद्योत्तमा**—तपोवन की कलिका वह शकुन्तला सखियों के साथ खेलती, परिहास करती आश्रम के वृक्षों और लताओं को सींचती क्रमशः यौवन से भर जाती है। मृगया का शौकीन पुरुवंशी सम्राट् दुष्यन्त उस तपोवन में प्रवेश करता है।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सह स्वानुरूपैः सलिलकलशैः आश्रमपादपान् सलिलं पाययन्ती सा निसर्गसुन्दरी प्रकृतिसुता सम्राजो दृष्टिपथमवतरति। अस्मिन्नेवावसरे सलिलसेकोद्गतो भ्रमर एको लतापुष्पाण्युज्झित्य शकुन्तलाया वदनं अभिवर्तते। तन्मुग्धं चञ्चलं सौन्दर्यमवलोक्य पद्यमेतत् सहसैव दुष्यन्तेन गीयते—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती॥

इदमनघं मुग्धं च श्री सौन्दर्यं कं न मोहयितुं क्षमम्।

इला—कवेः प्रतिभाऽद्भुताऽवर्णनीया च। नारीणां सौन्दर्यगुणदोष विदस्तस्य अनुभूतयः सूक्ष्मतामतिशयेनावगाहन्ते।

---

अपने अनुरूप जल से भरे घड़ों को लेकर सखियों के साथ वह निसर्गसुन्दरी प्रकृति-पुत्री शकुन्तला उसकी दृष्टि में आती है। इस समय जल-सिञ्चन से घबरा कर एक भौंरा लता-पुष्पों को छोड़ कर शकुन्तला के मुख की ओर बढ़ता है। इस मुग्ध चञ्चल सौन्दर्य को देखकर दुष्यन्त सहसा गाने लगता है—

चञ्चल नयन विकम्पित तिरछी दृष्टि पुनः स्पर्शित करते
मृदु रहस्य के वक्ता बन तुम कर्ण निकट गुञ्जन करते।
भुज धुनकाती तन्वङ्गी के पीते रति-सर्वस्व अधर
तत्वान्वेषण में रत हम हत किन्तु धन्य हो तुम मधुकर।

यह अनघ मुग्ध सौन्दर्य किसको मुग्ध नहीं कर सकता ?

इला—कवि की प्रतिभा अद्भुत और अवर्णनीय है। उसकी नारी-सौन्दर्य की अनुभूति अति सूक्ष्म है।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—रमणीनां वपुषामङ्गलावण्याभिव्यञ्जने एव न केवलं कवेराशयः, परं तस्य नवनवोन्मेषशालिनी प्रतिभा तासामान्तरिकभावनारामणीयक-चित्रचित्रणेऽपि स्वभिव्यक्ता भवति ।

**इला**—अहो महती असामान्या प्रतिभा संस्कारविशेषश्च ।

**विद्योत्तमा**—इले ! अन्तःपुरप्रमदवने मया शाकुन्तलोपाख्यानस्यायमङ्कोऽनेक-वारं पठितः । यदा यदाऽहमेनं पठामि, तदा तदा नवनवोऽर्थः प्रतिभासते । अनुभवामि, अहमेव शकुन्तला, कदाचिन्मे प्रणयी दुष्यन्तरूपः कालिदासः लतानिकुञ्जेषु निभृतं निलीय मामविरतमवलोकयति । (भावविह्वला भूत्वा चक्षुषी निमीलयति) ।

**इला**—राजकुमारि !

---

**विद्योत्तमा**—इले ! कवि का आशय केवश रमणियों के अङ्गों के सौन्दर्य के अभि-व्यक्त करने में ही नहीं है, परन्तु उसकी नव-नव भावों को उन्मिषित करने वाली प्रतिभा नारियों के आन्तरिक भावों के सौन्दर्य को भी अभिव्यक्त कर रही है ।

**इला**—अहो ! महती प्रतिभा और विशिष्ट संस्कार हैं ।

**विद्योत्तमा**—इले ! अन्तःपुर के उपवन में मैंने कवि के इस अङ्क को अनेक बार पढ़ा है । जब-जब मैं इसको पुनः-पुनः पढ़ती हूँ, तभी वहाँ नये-नये अर्थ की पुनः पुनः प्रतीति होती है । मुझको लगता है कि मैं ही शकुन्तला हूँ । कहीं मेरा दुष्यन्त रूपी प्रणयी लताओं के निकुञ्जों में छिप कर मुझको देख रहा है ।

(भाव-विह्वल होकर आँखों को बन्द कर लेती है ।)

**इला**—मेरा निवेदन ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—(चकितेव) किं कथयसि ?

**इला**—निवेदनमेकम् ।

**विद्योत्तमा**—प्रिय सखि ! इले ! कथं निवेदनम् ?

**इला**—राजकीयरङ्गशालायां नाटकानामेतेषामभिनयो भवेदित्येव मे निवेदनम् ।

**विद्योत्तमा**—त्वया तु मदीयेन हृदयेन सहैवामन्त्रितम् । श्रूयते—भारतवर्षस्यानेकेषु जनपदेषु नगरेषु चाभिनीयमानानां कालिदासप्रणीतनाटकानामवलोकनाय समुद्द्रवतो जनसम्मर्दस्य नियन्त्रणं राजपुरुषैरपि न सुकरम् । मम निवेदने पितृचरणैः प्रत्युक्तम्... ।

**इला**—किमुक्तं महाराजेन ?

**विद्योत्तमा**—वयमप्येतेषामभिनयं द्रष्टुकामाः । प्रजाजनाश्चापि तत्रामन्त्रिताः स्युः । अस्माभिरामन्त्रितो महाकविः कालिदासः । स्वयमेव स्वप्रणीतानां

---

**विद्योत्तमा**—प्रिय सखि ! निवेदन क्या है ?

**इला**—मेरा निवेदन है कि राजकीय रङ्गशाला में इन नाटकों का अभिनय कराया जावे ।

**विद्योत्तमा**—यह तो तुमने मेरे हृदय की बात कह दी । सुनती हूँ कि भारतवर्ष के अनेक नगरों और जनपदों में इन नाटकों का अभिनय किया जा रहा है । अभिनय को देखने के लिये उमड़ती हुई भीड़ को नियन्त्रित करना राजकर्मचारियों के लिए भी सरल नहीं है । इस विषय में मैंने पिता जी से निवेदन किया था । उन्होंने कहा है... ।

**इला**—महाराज ने क्या कहा ?

**विद्योत्तमा**—कि हम भी इनका अभिनय देखना चाहते हैं । प्रजाजन भी इसमें निमन्त्रित हो । हमने महाकवि कालिदास को निमन्त्रित किया है । वे स्वयं ही

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नाटकानामभिनयं स निर्देक्ष्यति। नाटकप्रणेतुः निर्देशनेऽभिनीयमानानां नाटकानामभिनयोऽधिकं प्राणमयो भविष्यति।

इला—(सामोदम्) सौभाग्यमेवास्माकं कविदर्शनस्य। कदा सम्भाव्यते तदागमनम्?

विद्योत्तमा—पितृचरणाः कथयन्ति स्म, कविना प्रस्थितमुज्जयिन्याः। सम्भवतोऽद्य वा श्वो वा आगन्तार एव।

(नेपथ्ये राजहंसानां कलकूजनं श्रूयते)

इला—राजकुमारि! इतः पश्यतु महद्भूतम्। अनुरागहृदयनिहितोऽयं राजहंसो मधुरं कूजन्नुपगच्छति प्रियां राजहंसीं धीरगत्या। अनुरागौत्सुक्यसंभृतनयनेयं राजहंसी तस्य स्वागताय मधुरं कूजति।

---

इन नाटकों के अभिनय का निर्देशन करेंगे। नाटककार के निर्देशन में अभिनय अधिक जीवन्त होगा।

इला—(प्रसन्नता से) कवि का दर्शन हमारे लिये सौभाग्य होगा। उनके आने की सम्भावना कब है?

विद्योत्तमा—पिता जी कहते थे कि कवि ने उज्जयिनी से प्रस्थान कर दिया है। सम्भवतः आज या कल ही आ जायेंगे।

(नेपथ्य में राजहंसों की कूजन-ध्वनि सुनाई देती है)

इला—राजकुमारि! इधर देखिये। अति अद्भुत है। प्रेम से भरे हृदय वाला यह राजहंस मधुर कूजन करता हुआ अपनी प्रिया राजहंसी की ओर धीर गति से बढ़ रहा है। उत्सुकता और अनुराग से भरे नयनों वाली राजहंसी मधुर कूजन द्वारा उसका स्वागत कर रही है।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—(स्मित्वा) अहो, अत्यद्भुतं हृदयहारि च दृश्यम्। शुभनिमित्तं वर्तते।

(धावन्ती प्रविशति इरा। क्षणं स्थित्वा निःश्वसिति)।

**इरावती**—(प्रणम्य) राजकुमारि ! राजकुमारि ! महाराजः...

**विद्योत्तमा**—(स्मितमभिनीय) आम् कथय, राजकुमारि ! महाराजः।

**इरावती**—(लज्जितेव मुखमवनमय्य) राजकुमारि ! महाराज आदिशति, (ससम्भ्रमम्) न हि न हि निवेदयति (दन्तैः जिह्वां सम्मर्द्दर्य) न हि न हि कथयति।

**विद्योत्तमा**—वाढम्। कथय, किमादिशति महाराजः ?

**इरावती**—(शान्ता भूत्वा) राजकुमारि ! महाराजः कथयति, महाकवि-कालिदासमहाभागाः नगरबाह्यद्वारस्य तोरणभूमिं समुपस्थिताः।

---

**विद्योत्तमा**—(मुस्करा कर) अहो ! अति अद्भुत और हृदय को अच्छा लगने वाला दृश्य है। यह शुभ शकुन है।

(दौड़ती हुई इरावती का प्रवेश। क्षणभर ठहर कर वह लम्बा श्वांस लेती है)।

**इरावती**—(प्रणाम करके) राजकुमारि ! राजकुमारी। महाराज ने... ।

**विद्योत्तमा**—(मुसकरा कर) हाँ कह, राजकुमारी। महाराज ने। क्या ?

**इरावती**—(लज्जित सी होकर मुस्करा कर) राजकुमारि ! महाराज आदेश देते हैं...घबरा कर नहीं, नहीं निवेदन करते हैं..., दान्तों से जीभ काट कर नहीं, नहीं, कहते हैं।

**विद्योत्तमा**—हां कह, महाराज क्या आदेश देते हैं ?

**इरावती**—(शान्त होकर) राजकुमारि ! महाराज कहते हैं कि महाकवि कालिदास महोदय नगर के बाह्य द्वार के तोरण पर उपस्थित हो गये हैं।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्योत्तमा इला च—(ससम्भ्रममुत्थाय) किं कथयसि, किं महाकविः, कालिदासमहाभागाः एतस्य नगरस्य द्वारभूमिमुपस्थिताः ?

इरावती—आम्, राजकुमारि ! प्रधानोऽमात्यः सम्भ्रान्तगण्यमान्यनागरिकैः सह महाकवेः स्वागतार्थं तत्र संप्राप्त एव ।

विद्योत्तमा—किं तर्हि ?

इरावती—महाराजोऽपि कवेः स्वागतार्थं राजभवनस्य सिंहद्वारमुपतिष्ठते ।

विद्योत्तमा—कश्चादेशोऽस्मदर्थं महाराजस्य ?

इरावती—कथितं महाराजेन, महाकवेरुत्सवयात्रा राजभवनस्य कुमार्यन्तःपुरवर्तिनो राजकुमारी कक्षाधस्ताद् राजपथाद् अतियन्ती राजप्रासादस्य सिंहद्वारं गमिष्यति । राजकुमारी स्वकक्षगवाक्षमार्गेण कवेः दर्शनं कर्तुं

---

विद्योत्तमा और इला—सम्भ्रम से उठकर क्या कहती हो ? क्या महाकवि कालिदास इस नगर के बाह्य द्वार पर उपस्थित हो गये हैं ?

इरावती—हाँ, राजकुमारि ! सम्भ्रान्त गण्य-मान्य नागरिकों के साथ प्रधान अमात्य महाकवि के स्वागत के लिये वहाँ पहुँच गये होंगे ।

विद्योत्तमा—तो क्या ?

इरावती—महाराज कहते हैं कि वे भी उनके स्वागत के लिये राजभवन के सिंहद्वार पर उपस्थित हो रहे हैं ।

विद्योत्तमा—और हमारे लिये महाराज का क्या आदेश है ?

इरावती—और महाराज ने कहा है कि महाकवि का जलूस राजभवन के कुमारी अन्तःपुर के राजकुमारी के कक्ष के सामने नीचे राजपथ से गुजरता हुआ राजप्रासाद के सिंहद्वार पर आयेगा । राजकुमारी अपने कक्ष की खिड़की के

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शक्नोति ।

**विद्योत्तमा**—(हर्षनिर्भरा) अहो महत्सौभाग्यमस्माकम् । चिरन्तनो मेऽभिलाषः पूर्णः । आनन्दनिर्भरयोर्मे नयनयोरद्यैव कृतार्थता ।

(कण्ठान्मुक्तादाम अवतार्य इरावत्यै प्रयच्छति) ।

**विद्योत्तमा**—इरे ! गच्छ । इमानि पुस्तकानि यथापूर्वं मम शयनकक्षे निधेहि ।

**इरावती**—यथाज्ञापयति राजकुमारी । (गृहीत्वा गच्छति) ।

(नेपथ्ये सुदूराद् वाद्यध्वनीनांमध्ये—विजयतां महाकविः कालिदासः, दीर्घजीवी भवतु महाकविः कालिदासः, अमरत्वमवाप्नुयात् महाकविः कालिदासः, एवंविधाः जयघोषाः श्रूयन्ते) ।

**विद्योत्तमा**—इले ! महाकवेरुत्सवयात्रा राजप्रादान्नातिदूरवर्तिनी । एतेषां

---

मार्ग से ही कवि के दर्शन कर सकती हैं ।

**विद्योत्तमा**—(हर्ष से भर कर) अहो ! आज उन महाकवि के दर्शनों का सौभाग्य प्राप्त होगा । मेरी चिरकालीन अभिलाषा पूरी होगी । आनन्द से भर कर मेरी आँखे आज कृतार्थ हो जावेंगी ।

(ग्रीवा से मातियों की माला उतार कर इरावती को देती है)

**विद्योत्तमा**—इरे ! जाओ । इन पुस्तकों को और छोटी मञ्जिका को पहले के समान मेरे शयन-कक्ष में रख दो ।

**इरावती**—जैसा राजकुमारी का आदेश है । (लेकर जाती है) ।

(नेपथ्य में दूर से वाद्य-ध्वनियों के मध्य—महाकवि कालिदास की जय हो, महाकवि कालिदास दीर्घजीवी हो, महाकवि कालिदास अमर रहे, इस प्रकार के जयघोष सुनाई देते हैं) ।

**विद्योत्तमा**—इले ! महाकवि का जलूस राजप्रासाद से अधिक दूर नहीं है । इन

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काव्यानां रचयितुः प्रशंसको जनसम्मर्दः जयघोषानुदीरयति। आगच्छ, आवामपि तस्य दर्शनेन चक्षुषोः फलमवाप्य प्रसूनानि विकिरेव।

(राजकुमारी कुसुमगुच्छात् पुष्पाण्यादाय कानिचिच्च इलायै प्रयच्छति। उभे त्वरितगत्या कुमार्यन्तःपुरं प्रति प्रतिष्ठेते। वाद्यानां ध्वनयो जय-घोषाश्च समीपमायान्त इव प्रतीयन्ते)।

(यवनिका पतति)

इति चतुर्थोऽङ्कः

---

काव्यों की रचना करने वाले कवि का प्रशंसक जन-समुदाय उस महाकवि के जयघोषों का उच्चारण कर रहा है। आओ, हम भी उस महान् विभूति के दर्शन करके आँखों के फल को प्राप्त करें। उसके ऊपर श्रद्धा के पुष्प बखेर दें।

(राजकुमारी पुष्पों के गुच्छे से कुछ पुष्प देकर उनमें से कुछ इला को देती है। दोनों त्वरित गति से कुमारी अन्तःपुर की ओर चल देती हैं। वाद्यों की ध्वनियाँ और जयउद्घोष समीप आते प्रतीत होते हैं)।

(यवनिका गिरती है)

चौथा अङ्क समाप्त हुआ

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# पञ्चमोऽङ्कः

(राजकुमार्याः विद्योत्तमायाः शयनकक्षः स एव, यत्र दशवर्षपूर्वं वरवधूरूपिणौ राजकुमारीकाष्ठभारिकौ लक्षितौ। परं कक्षस्य सज्जा न तथा। अलङ्करणोपकरणादिराहित्यं वर्तते। गवाक्षं निकषा मञ्चिका कुशनलनिर्मितकटास्तृता अन्यस्यां लघुमञ्चिकायां जलपात्रं कालिदासरचितकाव्यानि च दृश्यन्ते। गवाक्षमार्गात् कालिदाससम्बन्धिनो जयघोषाः श्रूयन्ते। इला-विद्योत्तमे गवाक्षाद् मुखं निस्सार्य कालिदासोत्सवयात्रां निरूपयतः)।

इला—(गवाक्षाद् मुखंनिस्सार्य) राजकुमारि ! अवलोकयतु, अवलोकयतु। महाकवेः स्वागतार्थं सकल एव जनपदो व्याकुल इव प्रतीयते। न केवलमत्रत्यैः नागरिकैः, अपितु चतुर्दिग्वर्तिभ्यो नगरेभ्यो ग्रामेभ्यश्च समागतैः प्रजाजनैरेष राजमार्गः सामोदकलकलैः प्रपूरितः। राजमार्गमभितो बालकाः,

---

# पाँचवां अङ्क

(राजकुमारी का वही शयन-कक्ष, जिसमें दस वर्ष पहले वधू और वर के वेश में राजकुमारी और लकड़हारा दिखाई दिये थे। परन्तु कक्ष की सज्जा वैसी नहीं है। सजावट की वस्तुयें और उपकरण नहीं हैं। खिड़की के समीप मञ्चिका पर कुश और निगाल की बनी चटाई बिछी है। छोटी मञ्चिका पर कालिदास रचित काव्य और जलपात्र रखे हैं। खिड़की के मार्ग से कालिदास सम्बन्धी जयघोष सुनाई देते हैं। इला और विद्योत्तमा खिड़की के समीप जाकर बाहर झांकते हैं)।

इला—(खिड़की से मुख निकाल कर) राजकुमारि ! देखिये, देखिये। महाकवि के स्वागत के लिये सारा जनपद आकुल है। इस नगर के नागरिक ही नहीं, चारों दिशाओं से नगरों और ग्रामो से आये हुये प्रजाजनों ने इस राजमार्ग को प्रसन्नता के कोलाहलों से भर दिया है। राजमार्ग के दोनों ओर एकत्रित बालिकायें,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बालिकाः, युवकाः, युवतयः, प्रौढाः वृद्धाश्च स्त्रियः समुदिताः महाकवेर्दर्शनैरात्मानमामोदयन्ति ।

**विद्योत्तमा**—(बहिर्निरीक्ष्य) जनानां महत् मेलापकमिवात्र संलक्ष्यते ।

**इला**—विप्रकृष्टान्तरालान् हर्म्यपंक्तीन् अवलोकयतु । महाकविदर्शनाभिलाषिणीनां भवनगवाक्षेभ्यो वदनसरोजानिस्सारयन्तीनां कामिनीनां नयनेन्दीवरैः कुवलयितगवाक्षेयं नगरी । तत्र च कवेः मञ्जुलकान्तिनिरीक्षणाय तासामहमहमिकाऽपि संलक्ष्यते । युवतीभिर्विप्रकीर्णैरक्षतैः लाजाभिः पुष्पैश्च शुभ्रो राजमार्गः कवेर्यशसा धवली कृत इव संलक्ष्यते ।

**विद्योत्तमा**—इले ! पश्य । कवेः स्वागतार्थं नगरीयं सुशोभिता सुरभिता स्वलङ्कृता च विद्यते । न हि कदाचिदितः पूर्वमेतादृशी शोभा अवलोकिता ।

**इला**—राजकुमारि ! प्रेक्षतां तावत् । राजमार्गे ईषद्व्यवधानेषु तोरणानि आम्राशोकतमालकदल्यादिविविधमाङ्गलिकवनस्पतीनां हरितपत्रैः पुष्पाणां

---

युवक-युवतियां, प्रौढ और वृद्धा स्त्रियाँ, तथा वृद्ध जन महाकवि के दर्शन करके अपने को आनन्दित कर रहे हैं ।

**विद्योत्तमा**—(बाहर देखकर) मनुष्यों का महान् मेला सा दिखाई देता है ।

**इला**—दूर स्थित महलों की पंक्तियों को देखिये । महाकवि के दर्शनों की इच्छा करने वाली और भवनों की खिड़कियों से मुखरूपी कमलों को ऊपर उठाती हुई युवा कामिनियों के नेत्ररूपी नील कमलों से यह नगरी मानों नीले कमलों से भरी खिड़कियों वाली हो गई है । वहाँ वे कवि की सुन्दर कान्ति को देखने के लिये—"मैं पहले, मैं पहले" कर रही हैं । युवतियों द्वारा बिखेरी खीलों, अक्षतो और पुष्पों से यह राजमार्ग मानों कवि के यश से शुभ्र सा दिखाई दे रहा है ।

**विद्योत्तमा**—इले ! देखो । कवि के स्वागत के लिये नगर कितना सुशोभित और अलङ्कृत किया गया है । इससे पूर्व कभी भी ऐसी शोभा दिखाई नहीं दी थी।

**इला**—राजकुमारि ! देखिये । राजमार्ग पर थोड़ी-थोड़ी दूरी पर तोरण हैं । इन तोरणों को आम, अशोक, तमाल, केला आदि सुमांगलिक विविध वृक्षों के हरे

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्रग्भिः विविधविचित्रवर्णवर्णितपताकाभिश्च अलङ्कृतानि । उपरिष्टाच्च विविधरागरञ्जिताः लघुवैजयन्तीराजयो गृहाद् गृहं यावद् राजमार्गमावृत्य लम्बन्ते । प्रतिभवनं द्वारोपरि लम्बमानाः भास्करकिरणचाकचक्यचमत्कृतिशालिन्यो वन्दनमालिका अनुपमां शोभां विस्तारयन्ति ।

**विद्योत्तमा**—इले ! पश्य, पश्य । सुदूरं जनसमुदायेन परिवृतो राजकीयो रथो गरुडध्वजेन परिचीयमानः समुपसर्पति ।

**इला**—राजकुमारि ! एतदप्यवलोकयतु भवती । रथमध्यहेमपीठसमारुढा तेजोमयी काप्याकृतिः लक्ष्यते । नियतं स एव कविः कालिदासः ।

**विद्योत्तमा**—आम् । सत्यमेव स महाकविः कालिदासः ।

**इला**—देवपालः प्रधानोऽमात्यस्तं निकषा विराजते । पश्य, कवेः दर्शनं समधिगम्य प्रजाजना उन्मत्ता इव सञ्जाताः । केचिद् गायन्तो परेऽच नृत्यन्तो गीतलयमनुसृत्य करतालिकावादनपूर्वकं प्रसरन्ति ।

---

पत्तों से, पुष्पों की मालाओं से और विविध रंगों से रंगी हुई पताकाओं से सजाया गया है । इनके ऊपर से होकर अनेक रंगों से रंगी छोटी-छोटी झण्डियाँ एक घर से लेकर दूसरे घर तक सारे राजमार्ग को ढके हुये हैं । प्रत्येक भवन के दरवाजे पर लटकती हुई सूर्य की किरणों की चकाचौंध से चमकती हुई बन्दनवारें अनुपम शोभा को विस्तृत कर रही हैं ।

**विद्योत्तमा**—इले ! देखो तो । दूर से जन-समुदाय से घिरा हुआ राजकीय रथ गरुडध्वज से पहचाना जाता हुआ समीप आ रहा है ।

**इला**—राजकुमारि ! आप और भी देखिये । रथ पर चढ़ी हुई एक महती तेजोमयी कोई आकृति है । निश्चय से वे महाकवि कालिदास ही हैं ।

**विद्योत्तमा**—हाँ, सत्य है । वे ही महाकवि कालिदास हैं ।

**इला**—प्रधान अमात्य उनके समीप विराजमान है । देखिये, इन कवि के दर्शन पाकर प्रजाजन उन्मत से हो रहे हैं । कुछ तो गा रहे हैं और दूसरे तालियाँ बजाकर गीत की लय के साथ नाच रहे हैं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—एतदप्यवलोक्य इले ! भवनानां गवाक्षेभ्यश्चवदनसरोरुहाण्युन्नमय्य स्वच्छन्दमीक्षमाणाभिः युवतिभिः कविरयं रक्तपिष्टातकवर्षणेनाताम्रतां नेनीयते : सकलमेव वातावरणं विद्रुमकिसलयमयमिव सम्भूतम् । न केवलं कविस्तस्य स्वागतकर्तारोऽपि सकलाङ्गेषु प्रफुल्लजपापुष्पपटलसन्निभामाभां धारयन्ति ।

**इला**—न तु दृष्टः, न चापि श्रुत एवंविधस्वागतमहिमा कदाचिदपि । चक्रवर्तिसम्राजामपि नैवंविधं स्वागतं भवति । सत्यमेव भणितिः मनीषिणाम्—"स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ।"

**विद्योत्तमा**—विदुषामेवंविध एव महिमा ।

**इला**—श्रूयते, स महाकविः यमपि ग्रामं, जनपद, नगरं वा समागमनेनालङ्करोति, तत्रत्याः जनाः तद्दर्शनरसानन्दनिर्भराः सन्तः एवंविधमेव अपूर्वोल्लासं प्रकटयन्ति ।

---

**विद्योत्तमा**—इले ! यह भी देखो । भवनों की खिड़कियों से और चन्द्रशालाओं से मुखरूपी कमलों को बाहर उठा कर स्वच्छन्द देखती हुई युवतियाँ लाल गुलाल की वर्षा करके कवि को लाल सा किये दे रही है । सारा ही वातावरण मूँगों और किसलयों से भरा सा हो गया है । न केवल कवि ही, अपितु उनका स्वागत करने वाले भी सभी अंगों में खिले हुये जपा की पंखुड़ियों सदृश लाल आभा को धारण कर रहे हैं ।

**इला**—इस प्रकार के स्वागत की महिमा न तो कभी देखी है और न कभी सुनी है । महान् सम्राटों का भी ऐसा स्वागत नहीं होता । मनीषी सत्य कहते हैं—"राजा का आदर अपने ही देश में होता है, परन्तु विद्वान् सभी स्थानों पर पूजा जाता है ।"

**विद्योत्तमा**—विद्वानों की ऐसी ही महिमा है ।

**इला**—सुना जाता है कि वे महाकवि भी जिस जनपद में, नगर से या ग्राम को अपने आगमन से अलङ्कृत करते हैं, वहाँ के लोग उनके दर्शन के आनन्द से भर इस प्रकार से ही अपूर्व उल्लास को प्रकट करते हैं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—इले ! त्वया सुष्ठु उक्तम् । राज्ञां सम्राजां वा पूजनं समादरो वा स्वदेश एव भयादेव वा सम्भवति । परन्तु विद्वांसः कवयश्च सर्वत्रैव पूज्यन्ते । अपि च, जगद्वन्दनीयस्यास्य कालिदासस्य मधुरसभावसमन्विताः कविताः जनानां हृदयानि अलौकिकरसालोकैः आपूरयन्ति ।

**इला**—राजकुमारि ! इतोऽप्यवलोकयतु । महाराजो मन्त्रिपरिषदा साकं राजभवनस्य मुख्यद्वारमुपस्थितः । कवेः स्वागतार्थं सर्वेषामेव कराः कुसुमसृग्भिः शोभन्ते । कवेः रथः कक्षस्याधस्तात् सिंहद्वारमुपस्थास्यत्येव ।

**विद्योत्तमा**—आम् इले ! सम्प्रति स्यन्दनः कक्षस्याधस्तात् प्राप्नोत्येव ।

**इला**—राजकुमारिं ! पश्यतु भवती । सम्प्राप्त एव रथः । आगम्यताम् । श्रद्धाकुसुमानि कवेश्चरणयोरर्पयेव ।

(पुष्पाणि विकीर्य भयार्तस्वरेण)

---

**विद्योत्तमा**—इले ! तुमने ठीक ही कहा है । राजाओं सम्राटों का पूजन और आदर उनके अपने ही देश में होता है और वह भी भय से ही । परन्तु विद्वानों और कवियों का सभी स्थानों पर आदर होता है । और भी बात यह है कि जगत् में वन्दनीय इन कालिदास की मधुर रसों और भावों से भरी हुई कवितायें लोगों के हृदयों को दिव्य आलोक से भर देती है ।

**इला**—राजकुमारि ! इधर भी देखिये । महाराज मन्त्रि-परिषद् के साथ राजभवन के मुख्य द्वार पर उपस्थित है । कवि का स्वागत करने के लिये सबके हाथ पुष्पमालाओं से शोभायमान है । कुछ ही क्षणों में कवि का रथ कक्ष के नीचे से होकर सिंह द्वार पहुंच जायेगा ।

**द्योत्तमा**—हाँ इले देखो, रथ अब कक्ष के नीचे पहुंच ही गया है ।

**इला**—राजकुमारि ! आप देखिये । रथ आ ही गया है । आइये, श्रद्धा के पुष्पों को कवि के चरणों में अर्पित करें ।

(पुष्प बिखेर कर कुछ डरे से स्वर में)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राजकुमारि ! राजकुमारि ! अहो, इयं भव्या शोभना आकृतिः प्रत्यभिज्ञातेव । आम्... किञ्चित् स्मरामि यत्... ।

**विद्योत्तमा**—(ससम्भ्रममिलायाः हस्तौ अवलम्ब्य) इले ! अयि इले ! ओह, किमिदं मया लक्ष्यते ?

(वक्षसि करौ निधाय सञ्जातमूर्छेव भूमौ पतति । सकरावलम्बं तामिला शनैः शनैः मञ्चिकाया मुपवेशयति । ततश्च लघुमञ्चिकातः सुशीतलसलिलं पात्रतः आनीय राजकुमारीवदनमभ्युक्षति । किञ्चित्कालानन्तरं राजकुमारी चक्षुषी समुन्मील्य परितो विलोकयति) ।

**इला**—(राजकुमार्याः ललाटे करतलं निधाय) राजकुमारि !

**विद्योत्तमा**—(इलायाः करं गृहीत्वा) इले !

**इला**—अपि स्वस्था भवती ?

---

राजकुमारि ! राजकुमारि ! अहो, यह भव्य सुन्दर आकृति कुछ पहचानी सी प्रतीत होती है । हाँ, कुछ स्मरण करती हूँ कि...

**विद्योत्तम**—(घबरा कर इला के दोनों हाथ पकड़ कर) इले ! अरी इले ! ओह, यह क्या है ? मैं यह क्या देख रही हूँ ? ओह... ।

(वक्ष पर दोनों हाथ रखकर मूर्छित सी होकर भूमि पर गिरने लगती है । इला उसको हाथ का सहारा देकर धीरे से मञ्चिका पर बैठा देती है । वहाँ छोटी मञ्चिका से शीतल जल भरा एक पात्र लाकर राजकुमारी के मुख पर छींटे मारती है । कुछ समय पश्चात् राजकुमारी आँखें खोल कर चारों ओर देखती है) ।

**इला**—(राजकुमारी के माथे पर हथेली रखकर) राजकुमारि !

**विद्योत्तमा**—(इला का हाथ पकड़ कर) इले !

**इला**—आप स्वस्थ तो हैं ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—(अवरुद्धविकम्पितप्रस्खलितस्वरेण) किं त्वया दृष्टम्, किं त एव सन्ति, त एव ? दर्शनाचार्याः । न हि, न हि, न्यायशास्त्रधुरीणस्य शिवदासस्यात्मजाः कालिदासाभिधानविभूषिताः । हन्त ! मया तिरस्कृत्य गृहान्निष्कासिताः । हा धिक्, हा धिक् । सम्प्रति किमहं करवाणि ?

**इला**—अलं सम्भ्रमेण । सम्प्रधारयतु भवती आत्मानम् । जगति समानाकृतयो बहवो जनाः दृग्गोचरीभवन्ति ।

**विद्योत्तमा**—(उत्थाय) इले ! न हि, न हि । एवं मा वादीः, । कथय—त एव सन्ति, त एव । (वक्षसि हस्तं धृत्वा) परन्तु, परन्तु... क्व ममेदृशं भागधेयम् ?

**इला**—राजकुमारि ! विधिरसम्भावितमपि वृत्तं घटयति ।

(भीतभीतेव दीर्घं निःश्वसन्ती इरावती प्रविशति) ।

**इरावती**—ते समायाता एव ।

---

**विद्योत्तमा**—(रुंधे, काँपते और लड़खड़ाते स्वर में) क्या तूने देखा ? क्या वे ही थे ? वे ही... । नहीं, नहीं महान् नैयायिक शिवदास के पुत्र कालिदास । खेद है कि मैंने तिरस्कृत करके उनको घर से निकाल दिया था । वे ही । हाय, धिक्कार है, धिक्कार है । अब मैं क्या करूँ ?

**इला**—घबराइये नहीं । अपने को सम्भालिये । संसार में समान आकृति वाले अनेक लोग दिखाई देते हैं । महाकवि के आकृति से वैसा होने पर भी... ।

**विद्योत्तमा**—(उठ कर) इले ! नहीं, नहीं । ऐसा मत कहो, मत कहो । कहो कि वे ही हैं, वे ही । (वक्ष पर हाथ रख कर) परन्तु..., परन्तु... । मेरा ऐसा भाग्य कहा ?

**इला**—राजकुमारि ! विधाता असम्भव बात को भी सम्भव कर देता है ।

(डरी हुई सी और लम्बे श्वाँस लेती हुई इरावती प्रवेश करती है) ।

**इरावती**—वे आ ही गये हैं ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्योत्तमा—(ससम्भ्रमम्) के समायाताः ?

इरावती—(सकम्पम्) ते... त एव ।

इला—अयि इरे ! ते--ते इति किं वदसि ? सुस्पष्टं कथय, के समायाताः, कुतः समायाताः, कुत्र समायाताः, किमर्थं समायाताः इति ?

इरावती—(दीर्घं निःश्वसन्ती) कथयामि, निवेदयामि । सत्वरं प्रधावनेन श्वासोऽवरुध्यते । (क्षणं विरम्य) किं न श्रुतं भवत्या महाकविकालिदासविषयकं वृत्तम् ? अद्यैव ते लोकैः सुस्वागतं सम्मानिताः । त एव राजकुमार्याः कक्षमभ्युपगन्तुकामाः ।

(राजकुमारी इला च अन्योन्यमवलोक्य)

इला—अयि इरे ! त्वं तु राजप्रासादस्य सिंहद्वारे महाराजं निकषा स्थिता आसीः । सम्यग् ब्रूहि, का वार्ता, येन महाकविः प्रथमं राजकुमारीमेव द्रष्टुं कामयते ।

---

विद्योत्तमा—(घबराहट से) कौन आ गये हैं ?

इरावती—(काँप कर) वे...वे ही ।

इला—अरी इले ! यह वे-वे क्या कह रही है । स्पष्ट कहो—कौन आ रहे हैं, कहाँ से आ रहे हैं, कहाँ आये हैं, किसलिये आये हैं ?

इरावती—(लम्बा श्वाँस छोड़ती हुई) कहती हूँ । निवेदन करती हूँ । तेजी से दौड़ने से श्वाँस रुक रही है । (क्षण भर रुक कर) क्या आपने महाकवि के विषय में नहीं सुना है, जिनका लोगों ने स्वागत और सम्मान किया है । वे ही राजकुमारी के कक्ष में आना चाहते हैं ।

(राजकुमारी और इला एक-दूसरे को देखते हैं)

इला—अरी इरे ! तुत तो राजप्रासाद के सिंहद्वार पर महाराज के समीप हीं खड़ी थीं । ठीक-ठीक बताओ कि क्या बात हो गई है, जो महाकवि ने पहले राजकुमारी का दर्शन करने की इच्छा की ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इरावती**—सखि ! किं कथयामि ? अविदितं वृत्तमेतन्ममापि। महाराजमनुस्थिताऽहं कवेः स्वागतसमारोहावलोकननिमग्नचिताऽभवम्. तदानीमेव राजकीयो रथः सिंहद्वारं सम्प्राप्तः। महाकविश्च रथादवतीर्णः।

**इला**—ततस्ततः। क्षिप्रं कथय।

**इरावती**—कथयाम्येव। तदनन्तरं महाराजेन मन्त्रिपरिषत्सदस्यैश्च स महाभागः प्रत्यग्रसुरभितभिसुमनोमालिकाभिरलङ्कृतः। मालिकाः कण्ठादवतार्य पार्श्वस्थितस्य सेवकस्यैकस्य हस्ते समर्प्य महाराजं प्रणम्य स महाकविः सकरबद्धं न्यवेदयत्।

**इला**—किं निवेदितं महाभागेन तेन ?

**इरावती**—भवतः परमविदुषी सुता विद्योत्तमा नारीषु रत्नम्। प्रथमं तावदहं तस्याः दर्शनेनात्मानं कृतार्थयितुं कामये। भवान् यदि अनुमन्यते...।

---

**इरावती**—सखि ! क्या कहूँ ? यह वृत्तान्त तो मुझको भी विदित नहीं है। महाराज के पीछे खड़ी हुई मेरा मन कवि के स्वागत समारोह को देखने में डूब गया था। तभी राजकीय रथ सिंहद्वार पर पहुँच गया। महाकवि उस रथ से नीचे उतरे।

**इला**—उसके बाद क्या हुआ ? शीघ्र कहो।

**इरावती**—कह तो रही हूँ। तदनन्तर महाराज ने और मन्त्रि-परिषद् के सदस्यों ने उन महाभाग को ताजे सुगन्धित पुष्पों की मालाओं से भर दिया। मालाओं को गले से उतार कर और पास में खड़े एक सेवक के हाथ में देकर उस महाराज को प्रणाम करके हाथ जोड़ कर निवेदन किया।

**इला**—उस महाभाग ने क्या निवेदन किया ?

**इरावती**—आपकी विदुषी कन्या नारियों में रत्न है। पहले मैं उनका दर्शन करके अपने को कृतार्थ करना चाहता हूँ। यदि आप अनुमति दें तो...।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इला---तदनन्तरं महाराजेन किमुक्तम् ?

इरावती---कांश्चित् क्षणान् महाराजस्तं निर्निमेषमवलोक्य कविप्रवरं किञ्चित् स्मित्वेव पार्श्ववर्तिनीं मामवोचत्---"इरे ! गच्छ। भणितव्याऽस्मद् वचनाद् विद्योत्तमा, कविप्रवरः सम्प्रत्येव तद्दर्शनाभिलाषी" इति।

इला---ततस्तः ?

इरावती---ततः किम्। महाराजस्यादेशेन सत्वरं धावमानाऽहमत्रायाता। अनुमतं चेत् तव, तं कविप्रवरमत्रानयामि।

इला---सखि इरे ! प्रष्टुकामा किमपि।

इरावती---पृच्छसि किन्न ? परं विधेहि त्वराम्।

इला---(साग्रहम्) वदत्वेतत्, किं त्वया कवेराकृतौ काचिद् विशेषता लक्षिता ?

इला---तब महाराज ने क्या उत्तर दिया ?

---

इरावती---कुछ क्षणों तक महाराज ने कवि महोदय को निर्निमेष देख कर कुछ स्मरण सा करके मुझसे कहा---"इरे ! जाओ और हमारे वचन से विद्योत्तमा से कहना कि कवि महोदय अभी ही उनका दर्शन चाहते हैं।"

इला---उसके पश्चात् ?

इरावती---उसके पश्चात् क्या ? महाराज का आदेश पाकर मैं तेजी से दौड़ती हुई यहाँ आ गई। यदि राजकुमारी की अनुमति हो तो मैं कवि महोदय को यहाँ ले आऊँ ?

इला---सखि रे ! कुछ पूछना चाहती हूँ।

इरावती---पूछती क्यों नहीं ? परन्तु शीघ्रता करें।

इला---आग्रह से यह बताओ कि क्या तुमने कवि की आकृति में कोई विशेषता लक्षित की ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इरावती**—ईदृशं तेजस्वि सुन्दरं कान्तिमदाननं न कदापि मे नयनपथमागतम्। परमत्र कश्चिद् विस्मयोऽपि। (क्षणं विरम्य) अपि स्मरति भवती तत्र-भवतो दर्शनाचार्यस्य, यः शास्त्रार्थे विजित्य राजकुमारीम्...।

**इला**—अस्तु तर्हि। गत्वा शीघ्रमानेयोऽसौ महाकविः।

(इरावती बहिः गच्छति)

**विद्योत्तमा**—अहो! किमेतत् संघटयति विधिः? निश्चयेन त एव सन्ति। अथवा प्रथमं ममावलोकनायैव कथं तेषामभिलाषः। हा किं करवाण्य-हम्?

**इला**—राजकुमारि सर्वथा परित्याज्योऽयं विचाराणामूहापोहः वितर्कश्च। प्रसन्नया मुखमुद्रया महाकवेः स्वागतं विधेयम्।

**विद्योत्तमा**—(इलां स्वसमीपमाकृष्य मन्दस्वरेण) इले! इमे त एव न वेति,

---

**इरावती**—ऐसा सुन्दर और कान्तिमान् मुख मैंने इससे पहले कभी नहीं देखा था। परन्तु मैं कुछ विस्मत भी हूँ। (क्षण भर रुक कर) क्या आप उन आदरणीय दर्शनाचार्य का स्मरण करती हैं, जिन्होंने राजकुमारी को शास्त्रार्थ में जीत कर...?

**इला**—तो होगा। जाकर उन कवि महाभाग को शीघ्र ले आओ।

(इरावती बाहर चली जाती है)

**विद्योत्तमा**—अहो विधाता! यह क्या हो रहा है। निश्चय से वे ही हैं। अन्यथा, सबसे पहले मुझको ही देखने की अभिलाषा क्यों करते? हाय, मैं क्या करूँ?

**इला**—राजकुमारि इस सोच-विचार को सर्वथा छोड़ दीजिये और प्रसन्न मुखमुद्रा से कवि का स्वागत कीजिये।

**विद्योत्तमा**—(इला को अपने समीप खींच कर मन्द स्वर में) इले! ये वे ही हैं या

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संशयो निवारणीयोऽस्माभिस्तेषां कक्षान्तः प्रवेशात्पूर्वमेव । अपि स्मरसि त्वं तेषां गमनसमये किमभिहितं मया ?

इला----न मया स्मर्यते ।

विद्योत्तमा—मया कथितमासीत्----"विद्यापारङ्गते प्रत्यागते भवति प्रश्न एको मया प्रक्ष्यते ।"

इला----(स्मृतिमभिनीय) आम् स्मृतम् । प्रश्नस्त्वासीद् "अस्ति कश्चिद् वागर्थ" ? इति ।

विद्योत्तमा—अथ चेदमपि प्रोक्तम्----सम्यक् समाहिते प्रश्ने कक्ष एतस्मिन् प्रवेशः ।

इला----आम् । इदमपि भणितं भवत्या ।

विद्योत्तमा—इले ! अहमिह गवाक्षाभिमुखी तिष्ठामि । त्वं द्वारमन्तरतोऽर्गलितं विधेहि । खटखटायिते च द्वारे त्वया प्रष्टव्योऽयं प्रश्नः । सति च समुचिते उत्तरे द्वारमुद्घाटनीयम् ।

---

नहीं, इस संशय को हमें दूर करना चाहिये । यह कार्य उनके कक्ष में अन्दर प्रवेश करने से पहले ही होना चाहिये । तुमको स्मरण नहीं कि उनके बाहर जाने से पहले मैंने क्या कहा था ?

इला—मुझको स्मरण नहीं कि आपने क्या कहा था ।

विद्योत्तमा—मैंने कहा था कि विद्या में पारङ्गत होकर लौटने पर मैं एक प्रश्न पूछूंगी ।

इला—(स्मरण करने का अभिनय करके) हाँ, स्मरण हो आया । प्रश्न था—"अस्ति कश्चिद् वागर्थः" ?

विद्योत्तमा—इले ! मैं यहाँ खिड़की की ओर मुख करके खड़ी होती हूँ । तुम द्वार को अन्दर से चिटखनी लगा दो । दरवाजे को खटखटाने पर तुम यह प्रश्न पूछना । उसका समुचित रूप से उत्तर देने पर द्वार को खोल देना ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इला----यथाज्ञापयति राजकुमारी ।

(राजकुमारी गवाक्षाभिमुखी तिष्ठति । इला च द्वारमन्तरतोऽर्गलयति । क्षणानन्तरं द्वारे खटखटेति ध्वनिः) ।

इला—श्रीमन् ! को भवान् ?

बहिर्द्वारम्—अहो, न प्रत्यभिजानाति भवती माम् । अहमस्मि...

इला—नाऽहं प्रत्याभिजानामि भवन्तम् । भवानेव स्वपरिचयं ददातु ।

बहिर्द्वारम्—सम्प्रत्यहं कालिदासाभिधेयः कविः । परन्तु···

इला—श्रीमन् ! परन्त्विवति किम् ?

बहिर्द्वारम्—परन्तु राजकुमार्याः दर्शनाचार्यः । न हि, करिया, स ग्राम्यः काष्ठभारिकः ।

---

इला—राजकुमारी जैसा आदेश करती हैं ।

(राजकुमारी खिड़की की ओर मुख करके खड़ी होती है । इला द्वार के अन्दर से चिटखनी लगाती है । क्षण भर बाद ही द्वार पर खट-खट ध्वनि होती है) ।

इला—श्रीमन् ! आप कौन हैं ?

द्वार के बाहर से—अहो ! क्या आप मुझको नहीं पहचानती ? मैं हूँ...

इला—श्रीमन् ! मैं तो आपको नहीं जानती । आप ही अपना परिचय दीजिये ।

द्वार के बाहर से—अब तो मैं कालिदास नाम का कवि हूँ । परन्तु...

इला—श्रीमन् ! परन्तु क्या... ?

द्वार के बाहर से—परन्तु राजकुमारी विद्योत्तमा का दर्शनाचार्य । नहीं नहीं, करिया ।। वह गंवार लकड़हारा ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इला**—श्रीमन् ! राजकुमारी कथयति—"सभ्यगुत्तरिते मे प्रश्ने भवतामन्तः प्रवेशः" ।

**बहिर्द्वारम्**—प्रष्टव्यं भवत्या ।

**इला**—राजकुमारी पृच्छति—"अस्ति-कश्चिद्-वागर्थः" ?

**बहिर्द्वारम्**—अस्यैव प्रश्नस्योत्तरं मया दशवर्षाणि यावत् समासाधितम् । विशदमुत्तरं तु अन्तः प्रविश्यैव भविष्यति, संक्षेपतस्तु—"न केवलं वागर्थः, अपितु स रस-भावविभूषितः" ।

(इला द्वारमुद्घाटयति । महाकविः कालिदासः कक्षं प्रविशति । तमनुसरन्ती इला वक्षस्यैक कोणमवलम्बते । महाकविं प्रणम्य इला तत्रैव द्वारसमीपं तिष्ठति । उपगवाक्षं राजकुमार्याः वाष्पगद्गदरोदनध्वनयः श्रूयन्ते) ।

---

**इला**—श्रीमन् ! राजकुमारी कहती है कि एक प्रश्न का ठीक-ठीक उत्तर देने पर ही आप अन्दर प्रवेश कर सकते हैं ।

**द्वार के बाहर से**—आप पूछिये ।

**इला**—राजकुमारी पूछती है—"अस्ति-कश्चिद्-वागर्थः" ?

**द्वार के बाहर से**—उसी प्रश्न के उत्तर का समाधान मैंने दस वर्षों तक किया है । विस्तार से उत्तर तो अन्दर आने के बाद ही दूंगा । संक्षेप से उत्तर हैं—"न केवलं वागर्थः, स तु रसभावविभूषितः" (केवल शब्द-अर्थ ही नहीं, वह रसों और भावों से विभूषित हैं) ।

(इला द्वार को खोलती है । महाकवि कालिदास कक्ष में प्रवेश करते हैं । उनके पीछे आकर इला कक्ष के एक कोने में खड़ी हो जाती है । महाकवि को प्रणाम करके इला वहीं द्वार के समीप खड़ी रहती है । खिड़की के समीप खड़ी हुई राजकुमारी की आंसुओं से गद्गद रुदन ध्वनियां सुनाई देती हैं) ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कालिदासः**—(विद्योत्तमामुपगम्य) किं साम्प्रतमपि रुष्टा मयि भवती ? (किमप्युत्तरमनवाप्य) राजकुमारि ! भवत्या एव वचनानि—"विद्योत्तमा विद्यावत एव । अभिहितं च भवत्या—"प्रश्ने सम्यक् समाहित एव कक्षे प्रवेशाधिकारः" । न श्रुतं भवत्या तदुत्तरम् ? किं विस्तरेण श्रोतुकामा भवती ?

**इला**—कविप्रवर ! राजकुमार्याः दशवर्षाणामयमवधिः...।

**कालिदासः**—जानमि इले ! जानामि । (विद्योत्तमां निरीक्ष्य) प्रिये ! किं नाद्याऽपि भवत्या अनुरूपोऽहम् । अनुगृह्णातु मां कृपा कटाक्षेण ।

**विद्योत्तमा**—(परिवृत्य महाकवेश्चरणयोर्निपत्य) नाथ ! आर्यपुत्र ! क्षन्तव्या मेऽपराधाः । अहं भवन्तम्... ।

**कालिदासः**—(विद्योत्तमा भुजयोराबध्य उत्तरीयेण च चक्षूंषि प्रमृज्य) प्रिये ! मैवं मैवम् । उपकृतमेव ननु भवत्या । भवत्याः स एव व्यवहारो मे नवालोककारकः ।

---

**कालिदास**--(राजकुमारी की ओर मुख करके) क्या आज भी आप मुझसे रुष्ट हैं ? (कुछ भी उत्तर न पाकर) राजकुमारि ! आपके ही वचन थे कि विद्योत्तमा विद्यावान् के ही योग्य है । आपने कहा था कि मेरे प्रश्न का ठीक-ठीक उत्तर देने पर ही तुम मेरे कक्ष में प्रवेश कर सकोगे । क्या आपने उस उत्तर को नहीं सुना है ? क्या आप उसको विस्तार से सुनना चाहती हैं ?

**इला**—कवि श्रेष्ठ ! राजकुमारी ने दस वर्षों की अवधि... ।

**कालिदास**—जानता हूँ इले ! जानता हूँ । (विद्योत्तमा को देखकर) प्रिये ! क्या मैं अब भी आपके योग्य नहीं हूँ । कृपा-कटाक्ष से मुझको अनुगृहीत करें ।

**विद्योत्तमा**—(घूम कर और महाकवि के चरणों में गिर कर) नाथ ! आर्यपुत्र ! मेरे अपराधों को क्षमा कीजिये । मैंने आपको... ।

**कालिदास**—(विद्योत्तमा को भुजाओं में बाँध कर और उत्तरीय से उसके आँसुओं को पोछ कर) प्रिये ! ऐसा मत कहो, ऐसा मत कहो । आपने तो मेरा उपकार ही किया है । आपका वही व्यवहार मेरे लिये नये आलोक को देने वाला... ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इला**—कविप्रवर ! राजकुमार्याः मानसिकव्यथानाम्, असह्यविरहवेदनानां, पश्चात्तापाग्निज्वालासन्ताप्तनानां केवलमहं तस्याः वा हृदयम् । क्षणमपि न सुखं न च शान्तिः । वृश्चिकवृक्णेव वरटसंदष्टेव कीलकीलितेव इयं सततमुत्पीडिता उद्विग्ना च ।

**कालिदासः**—(राजकुमार्याः वाष्पाम्बुपूर्णं वदनसरोरुहमुन्नमय्य) प्रिये ! तवेदं कृश वपुः, मलिनं मुखं, शृङ्गार विहीनातन्वी देहयष्टिः, पुष्पसज्जाविरहिता एकावेणी, सरलधवलवसनानि प्रकटयन्त्येव मनसोऽन्तर्निगूढां वेदनाम् ।

**इला**—कविप्रवर ! गते भवति भवतोऽन्वेषणाय राज्यस्य सुनिपुणाः चाराः समस्ते भरतखण्डे विचरन्ति । इयं चापि मां सहचरी स्थाने-स्थाने परिभ्रान्ता । पत्युः वरणार्थं सती सावित्री भरतखण्डस्य परिभ्रमणमकरोत् । परमेषा सती (विद्योत्तमां निरीक्षते) ।

---

**इला**—कवि श्रेष्ठ ! राजकुमारी की मानसिक पीड़ाओं, असह्य विरह-वेदनाओं और पश्चात्ताप की अग्नि की ज्वालाओं के सन्तापों की साक्षी या तो केवल मैं हूँ या राजकुमारी का हृदय ही है । क्षणभर के लिये भी न तो सुख रहा और न शान्ति । बिच्छू से काटे, ततैया से डसे एवं कील से बिंधे व्यक्ति के समान ये निरन्तर उत्पीडित और उद्विग्न ही रही हैं ।

**कालिदास**—(राजकुमारी के आँसुओं से भरे मुख को ऊपर उठाकर) प्रिये ! तुम्हारा यह कृश शरीर, मलिन मुख, शृङ्गार से रहित पतली देहयष्टि, फूलों की सजावट से रहित एक वेणी और सादे श्वेत वस्त्र तुम्हारे मन के अन्दर छिपी वेदना को प्रकट कर ही रहे हैं ।

**इला**—कवि श्रेष्ठ ! आप के चले जाने पर आपको खोजने के लिये राज्य के निपुण गुप्तचर सारे भरतखण्ड में घूमते रहे । मुझको साथ लेकर ये भी अनेक स्थानों पर भटकती रहीं । सती सावित्री ने पति का वरण करने के लिये भरतखण्ड का परिभ्रमण किया था । परन्तु इस सती ने वरण किये गये पति को खोजने के लिये... । (विद्योत्तमा की ओर देखती है ।)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—(अवरुद्धस्वरेण) सत्यमस्ति आर्यपुत्र ! सत्यमेव । यदि न विश्वसिति भवान्... ।

**कालिदासः**—न हि, न हि । मैवं कथय । अविश्वासः, सोऽपि भवत्याम् अयं विश्वास एव मे पाथेयः, आलोकः । भवत्प्रेरणया एवाऽहं विद्यां, कवित्वं यशश्चोपलब्धुं समर्थो बभूव । भवति एव मे शिक्षिका उपदेष्ट्री च ।

**इला**—कविप्रवर ! राजकुमारि ! कियन्तं कालं भवन्तौ एतादृशौ भविष्यतः । (मञ्चिकां निर्दिश्य अध्यासनेन कृतार्थनीयेयं मञ्चिका ।

(राजकुमारी कालिदासौ मञ्चिकामध्यासाते । इला तथैव तिष्ठति) ।

(राजकुमारी इलां समीपमागन्तुं सङ्केत्य कर्णे किमपि जपति) ।

**इला**—कविप्रवर ! कौतूहलं महदेकम् । धृष्टता चेत् क्षम्यते, किमपि प्रष्टुकामा ।

---

**विद्योत्तमा**—(रुँधे कण्ठ से) सत्य है, आर्यपुत्र ! सत्य है यदि आपको विश्वास न हो ... ।

**कालिदास**—नहीं, नहीं, ऐसा मत कहो । अविश्वास, और वह भी आप पर ? आपके प्रति विश्वास ने ही तो मुझको प्रकाश दिखाया है । आप ही मेरी शिक्षिका और उपदेश देने वाली हैं ।

**इला**—कविश्रेष्ठ ! राजकुमारि ! आप दोनों कितने समय तक इस प्रकार खड़े रहेंगे । (मञ्चिका की ओर संकेत करके) आप दोनों इस मञ्चिका को बैठकर कृतार्थ करें ।

(राजकुमारी और कालिदास मञ्चिका पर बैठते हैं । इला वैसे ही खड़ी रहती है । राजकुमारी इला को समीप आने का संकेत करके कान में कुछ कहती है) ।

**इला**—कवि श्रेष्ठ ! एक महान् कुतूहल है । यदि धृष्टता क्षमा हो, तो कुछ पूछना चाहती हूँ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कालिदासः—कथय, कथय । निःसङ्कोचं कथय ।

इला—भवान् इतो गमनानन्तरं क्व न्यवसत् । इयं विद्या, इयती प्रतिभा, ईदृशं कवित्वम्, एतद् यशः, सर्वमिदं कथमिवोपलब्धम् । यदि न भवति किञ्चिद् रहस्यं, श्रावणीयोऽयं वृत्तान्तः ।

कालिदासः—नात्र किञ्चिद् रहस्यम् । परं नाधिकः समयो वर्तते विशदरूपेण वर्णयितुम् । इदानीमेवाऽस्माभिः राजकुमार्या सह राजसभायामुपस्थातव्यम् । अतः संक्षेपेणैव वक्ष्यते ।

इला—कविप्रवर ! संक्षेपेणैव कथयतु, विस्तरेण पुनः श्रोष्यामः ।

कालिदासः—इतो निष्क्रम्याऽहं तदेव वेणुगङ्गातटवर्तिवनमनुप्राप्तः, यतस्तावुभौ पण्डितौ मां प्रसह्य परिगृह्यानीतवन्तौ ।

इला—हन्त ! तौ धूर्तपण्डितौ ?

---

कालिदास—कहो, कहो, निःसंकोच होकर पूछो ।

इला—यहाँ से जाने के पश्चात् आप कहाँ रहे ? यह विद्या, इतनी प्रतिभा, यह कवित्व और यह यश सब आपको कैसे प्राप्त हुआ ? यदि कोई रहस्य न हो तो इस वृतान्त को सुनाइये ।

कालिदास—इसमें कोई रहस्य नहीं है । परन्तु विस्तार से सुनाने का समय नहीं है । अभी हमको राजकुमारी के साथ राजसभा में उपस्थित होना है । अतः संक्षेप में ही कहूँगा ।

इला—संक्षेप से ही कहें । विस्तार से बाद में सुन लेंगे ।

कालिदास—यहाँ से निकल कर मैं उसी वेणुगङ्गा के तटवर्ती वन में पहुंचा, जहाँ से वे दोनों पण्डित मुझको पकड़ कर लाये थे ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इला—हाय, वे दोनों धूर्त पण्डित ?

कालिदासः—अथ किम्, तावेव पण्डितौ। तदानीं दिवसश्रमपरिक्लान्त इव सूर्यः स्वश्रमविनोदनार्थमस्ताचलाभिमुख आसीत्। सान्ध्यवेलायां क्षितिज-व्यापिनी रक्ताशोककिसलयाभा दिनकरस्यारुणाभा वनमभिव्याप्य सकला-न्येवाऽरण्यप्रान्तराणि निमज्जयति स्म अरुणरागे। सहसा पूर्वस्यां दिशि कामिनीकृष्णकुन्तलसवर्णानां सघनानां घनानामाडम्बरेण सकलं नभो-मण्डलमभिव्याप्तम्। परितश्च निबिडेनान्धेन तमसाऽऽवृताः सकला दिशः। घनाम्बराणि विदार्य उन्मिषन्तीनां तडितां चमत्कृतिभिः परितः प्रसृतम्। जीमूतानां स्तनितैस्तडितां च चमत्कृतिभिः बज्रनिर्घोषैश्च स वनप्रान्तो विकम्पित इव बभूव। तदानीमेवापतितः प्रचण्डो झञ्झावातः। भीषणो दुस्सहश्च प्रभञ्जनस्तरूणां स्थूलान् दृढांश्च स्कन्धांस्तृणानीव प्रकम्पयितुमारेभे। पदात्पदमपि चलनस्य तु कथैव का, सुस्थिरा स्थिति-रप्यसंभवा सञ्जाता। सहसा मेघः स्थूलस्थूलैर्बिन्दुभिर्वर्षितुं प्रवृत्तः। पूर्णतः क्लिन्नः। कुत्राप्याश्रयमलभमानोऽहं साघनक्लिन्नसकण्टकतरुक्षु

---

कालिदास—और क्या, वे दोनों ही पण्डित। उस समय दिन भर के श्रम से थका सूर्य मानो थकावट को दूर करने के लिये अस्ताचल की ओर जा रहा था। सांझ की वेला में क्षितिज को व्याप्त करने वाली और लाल अशोक के किसलयों के समान सूर्य की अरुणिम आभा वन में फैल कर सारे वन-प्रान्त को अरुणिम रंग में डुबो रही थी। अचानक ही पूर्व दिशा में कामिनियों के काले केशों के से रंग वाले घने मेघों के समूह ने सारे आकाश को व्याप्त कर लिया। सारी दिशायें चारों ओर घने अन्धकार से व्याप्त हो गईं। घने मेघों को चीर कर चमकती हुई बिजलियों की चमक चारों ओर फैल जाती थी। मेघों की गर्जनाओं से और बिजलियों की वज्र के समान ध्वनियों से वह वन प्रान्त कांपने सा लगा। तभी प्रचण्ड आँधी आ गई। इस भीषण दुस्सह आंधी ने वृक्षों के मोटे और मजबूत तनों को तिनकों के समान कंपाना प्रारम्भ कर दिया। एक कदम भी चलने की बात तो दूर रही, स्थिर खड़ा रहना भी असम्भव था। अचानक मेघों ने अति स्थूल बूंदों को बरसाना आरम्भ कर दिया। मैं पूरी तरह भीग गया। कहीं भी आश्रय को न पाकर मैं घने भीगे कांटेदार पौधों और

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रलतावल्लरीगहनान्यतिक्रम्य एकमत्युन्नतं शाकवृक्षमारुह्य सघनपत्रेषु निलीय स्थितः ।

**विद्योत्तमा**—(परिक्रम्य) अहो ! भयावहता भीषणता च प्रकृत्याः :

**कालिदासः**—तदानीं तस्मिन्नरण्ये सिंह-व्याघ्र-चित्रक-तरक्षु-वृक-ऋक्ष-वराह-गण्डकादीनां हिंस्रजन्तूनां भयावहाः गर्जनाः, वन्यकरिणां बृंहिताः, शृगाल-लोमशादीनां हर्षध्वनयो, मृगादीना च क्रन्दनार्तनादाः सर्वासु दिक्षु प्रासरन् । सहसा पञ्चाननस्यैकस्य भयप्रदानां गर्जनानां मध्ये कस्यचिन्मृगशावकस्य हृदयविदारिणा सचीत्कृतिक्रन्दनेन सकल एव वनप्रान्तो व्यवच्छिन्नः । तदनन्तरं तस्मिन्नरण्येद्भुतेव शान्तिः निस्तब्धता च विराजमाना बभूव ।

**विद्योत्तमा**—नियतं सिंहेन वराको मृगशावकः निगीर्णः ।

**कालिदासः**—प्रकृत्याः सैव भीषणता मह्यं वरदायिनी संभूता । सहसा सुदूरे

---

लताओं के घने प्रदेशों को लांघ कर एक ऊँचे सागौन वृक्ष पर चढ़ कर घने पत्तों के मध्य छिप कर बैठ गया ।

**विद्योत्तमा**—(कांप कर) अहो, प्रकृति की भयावहता और भीषणता ?

**कालिदास**—उस समय वन में चारों ओर सिंह, व्याघ्र, चीता, तेंदुआ, भेड़िया, भालू, सूअर, गैंडा आदि हिंस्र जन्तुओं की भयानक गर्जनायें, वन्य हाथियों की चिंघाड़ें, गीदड़-लोमड़ी आदि की हर्ष-ध्वनियाँ और मृग आदि जन्तुओं की क्रन्दन-ध्वनियाँ फैल रही थीं । एकाएक एक सिंह की भयानक गर्जनाओं के मध्य किसी हरिण-शिशु की चीत्कार ध्वनि ने सारे वनप्रान्त को चीर दिया । उस समय उस वन में जैसे एक विचित्र सी शान्ति व्याप्त हो गई ।

**विद्योत्तमा**—निश्चय ही बेचारे उस मृग-शिशु को सिंह ने निगल लिया ।

**कालिदास**—प्रकृति की वह भीषणता ही मेरे लिये वर देने वाली हो गई । अचानक

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्षितिजप्रान्ते तीव्रदीप्त्या सह तडकडदिति कडकडदिति निर्घोषः समुत्पन्नः। वेगवान् झञ्झावातः समुपस्थितः। सुदृढोऽपि स शाकतरुः प्रभञ्जनस्यैव प्रचण्डाघातं सोढुमसमर्थोऽभवत्। समूलमुन्मीलितः स भूमौ पपात। वृक्षस्य पतनसमकालमेवाऽहमप्यात्मानं भूमावपश्यम्। परं शिरस्येकेन स्थूलविटपेनास्फालितस्य मे निश्चेतनतया नयने निमीलिते।

**विद्योत्तमा इला च**—हा! हा! किं वृत्तमिदम्? (उत्तरीयेण अश्रूणि प्रमृजतः)।

**कालिदासः**—तदनन्तरं नयनोन्मीलने सञ्जातेऽहमात्मानं कालीदेव्याः मन्दिरे व्यलोकयम्। सम्मुखमेव भगवती भक्तिभावसंभारिणी भयदायिनी काली देवी प्रतिमारूपेण तिष्ठति। भयावहा जिह्वा पापिजनानवलेढुं लेलायमाना ज्योतिरिङ्गणवृष्टिसमूहमिव वह्निकणवृन्दमुद्गिरन्ती वदनाद् बहिर्निच्छति। (स्वशिरः परामृशन्) चेतनामुपगतोऽहं शिरसि महतीं वेदनामसह्यामन्वभवम्।

**इला**—ओह! ततस्ततः?

---

ही सुदूर क्षितिज वनप्रान्त में तेज चमक के साथ तड़तड़, कड़कड़ करके बिजली का निर्घोष हुआ। तेज आँधी चलने लगी। बहुत मजबूत भी सागौन वृक्ष आँधी के इस आघात को सह न सका। जड़ से उखड़ कर वह भूमि पर गिर गया। वृक्ष के गिरने के साथ ही मैंने भी अपने आपको भूमि पर देखा। परन्तु सिर के एक मोटी शाखा से टकरा जाने के कारण बेहोशी ने मेरी आँखें बन्द कर दीं।

**विद्योत्तमा और इला**—हाय हाय। यह क्या हुआ? उत्तरीय से आँसू पोंछती है।

**कालिदास**—उसके पश्चात् आँखें खुलने पर मैंने अपने को भगवती काली के मन्दिर में देखा। सामने ही भगवती काली की विशाल, भक्ति-भाव को भरने वाली भयप्रद मूर्ति प्रतिष्ठित थी। भयानक जीभ मानो पापियों को चाट जाने के लिये जुगनुओं की वर्षा के समान अग्नि की ज्वालाओं को मुख से बाहर उगल रही थी। (अपने सिर को सहलाते हुये) सचेतन होकर मैंने अपने सिर में असह्य महती पीड़ा का अनुभव किया।

**इला**—ओह, उसके पश्चात्?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कालिदासः**—प्रथमं तु मयाऽनुभूतं शिरो मे शतशः खण्डेषु स्फोटिष्यते । परं शनैः शनैः वेदनया लाघवं सम्प्राप्तम् । अनुभूतं च मया, सर्वं जडत्वं, सकलं चाज्ञानतिमिरान्धत्वं कस्याश्चिद् देव्याः प्रभावेण नवाभ्युदितेन दिवाकरेण निशीथिनीतिमिरमिव तिरोभवति ।

**विद्योत्तमा**—अहो ! सर्वा ह्येषा देव्या एवानुकम्पा ।

**कालिदासः**—तदानीं विगतजीवनस्य स्मरणं मम हृदये महतीं ग्लानिमुदपादयत् । सकलमेव जीवनं व्यर्थं प्रतीयाय । अदमनीयोऽभिलाषः समुत्पन्न, इहैव भगवत्याश्चरणयोः स्वशिरो विकर्त्यार्पयेयम् । सन्निकट एव एको विशालश्चन्द्रहासो वक्रतीक्ष्णधारो धृत आसीत् । स तु मया दक्षिण कराङ्गुलिप्रणयीकृतः ।

**विद्योत्तमा**—हा हा, किमेतदुदीरयन्ति भवन्तः ?

---

**कालिदास**—पहले तो मुझे ऐसा प्रतीत हुआ कि मेरा सिर ही सैकड़ों टुकड़ों में फट जायेगा । परन्तु कुछ समय के बाद मेरी यह पीड़ा कम होने लगी । मुझे अनुभव हुआ कि मेरी सारी जड़ता और सारा अज्ञान पी अन्धकार किस देवी के प्रभाव से उसी प्रकार तिरोहित हो रहा है, जैसे कि नये उदय होते हुये सूर्य से रात्रि का अन्धकार नष्ट होता है ।

**विद्योत्तमा**—अहो ! यह सारी देवी की अनुकम्पा ही थी ।

**कालिदास**—तब विगत जीवन का स्मरण करके मेरे हृदय में बहुत अधिक ग्लानि होने लगी । सारा जीवन व्यर्थ लगने लगा । मन में अदमनीय अभिलाषा उत्पन्न हुई कि यहीं भगवती के चरणों में अपने सिर को काट कर अर्पित कर दूं । पास ही एक तिरछी तेज धार वाली तलवार रखी थी । मैंने उसको अपने हाथ में पकड़ लिया ।

**विद्योत्तमा**—हाय हाय, यह आप क्या कह रहे हैं ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इला**—ततश्च किं सञ्जातम् ?

**कालिदासः**—प्रार्थिता मया काली देवी—"देवि अस्मिन् जन्मनि त्वहं मूर्ख एवाभवम्। विद्या च नाधिगता। स्वकीयेनाशीर्वचसा तथाऽनुग्राह्योऽयं जनो, जन्मान्तरेषु विद्यावारिधिर्भूत्वा विद्योत्तमाया अनुरूपतां लभेय।"

**विद्योत्तमा**—हा आर्यपुत्र ! मयि एतादृशोऽनुरागो भवतः, परमहं तथाभूता निर्घृणा क्रूरहृदया च।

**कालिदासः**—तदनन्तरं तु शिरश्छेत्तुमुत्थापित एव चन्द्रहासे पृष्ठतः केनापि मे परिगृहीतः दक्षिणहस्तः सखड्गः। सम्भ्रमेण मे हस्ताच्चन्द्रहासः परिभ्रश्य सझणत्कारमधो भूमौ निपतितः। परिवृत्य चावलोकितं यदेको जटिलः परिव्राड् हस्तं मे सन्धारयति।

**विद्योत्तमा**—अहो देवि भवितव्यते ! महदुपकृतं त्वया मे।

---

**इला**—इसके बाद क्या हुआ ?

**कालिदास**—मैंने काली देवी से प्रार्थना की—हे देवि ! मैं इस जन्म में तो मूर्ख ही रहा, विद्या को प्राप्त नहीं कर सका। आप इस व्यक्ति पर अपने आशीर्वाद की ऐसी कृपा करना कि अगले जन्म में मैं विद्या प्राप्त करके राजकुमारी विद्योत्तमा के अनुरूप बन सकूं।

**विद्योत्तमा**—हाय आर्यपुत्र ! मेरे प्रति इतना स्नेह और मैं ऐसी निर्घृण तथा क्रूर हृदय... ।

**कालिदास**—उसके बाद सिर काटने के लिये जैसे ही मैंने तलवार उठाई, किसी ने मेरा दाहिना हाथ पकड़ लिया। इस हाथ में तलवार थी। घबराहट में हाथ से तलवार छूट कर नीचे भूमि पर गिर गई। घूम कर देखा तो एक जटाधारी सन्यासी ने मेरा हाथ को पकड़ा हुआ था।

**विद्योत्तमा**—अहो देवि ! भवितव्यते ! तुमने मुझ पर बहुत उपकार किया।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कालिदासः—स परिव्राडवोचत्—"पुत्र ! त्वामहं परिचिनोमि । त्वं मे सुहृदः सतीर्थ्यस्य न्यायशास्त्रपारङ्गतस्य शिवदासस्य सुतः । शिवदासोऽहं च एकस्यैवाचार्यस्य अन्तेवासिनावास्व । वनप्रान्तेषु भ्रमता मया त्वं विगत-चेतनोऽवलोकितः । उत्थाप्य च त्वामहमेतद्देवीमन्दिरमानीतवान् । शैशवे शिरस्याघातेन जडतां गता ते बुद्धिरिदानीं भगवत्याः प्रसादेन पुनरपि प्रबलेनाघातेन सचेतनत्वमागता । इदानीं तवान्तः करणे सैव नवनवभावो-न्मेषशालिनी प्रतिभावती मतिर्विकसति ।"

इला—कविप्रवर ! शशिसूर्यावपि राहुणा ग्रस्येते । समाप्ते चोपरागे तयोः स एव प्रकाशो दंदीप्यमानो भवति । अपगते मालिन्ये स्वच्छीभूते च दर्पणे तत्र प्रतिबिम्बनं पूर्ववदेव दृष्टिगोचरं भवति । अनुकूले च विधौ मनो-रञ्जनं लभत एव जनः ।

कालिदासः—कथितं तेन परिव्राजा----"वत्स ! विद्यामधिगन्तुं त्वया परिश्रमो विधेयः । प्रतिभया त्वमर्जिष्यसि शिवदासमप्यतिशयानां विद्यां कीर्तिं च ।

---

कालिदास—उस सन्यासी ने कहा—"हे पुत्र ! मैं तुमको पहचानता हूँ । तुम मेरे सहपाठी महान् नैयायिक शिवदास के पुत्र हो । शिवदास और मैं एक ही आचार्य के शिष्य थे । वन-प्रान्तों में घूमते हुये मैंने तुमको अचेतन देखा । तुमको उठा कर मैं इस भगवती के मन्दिर में ले आया । बचपन में सिर पर चोट पड़ने से तुम्हारी बुद्धि जड़ हो गई थी । अब भगवती की कृपा से पुनः प्रबल आघात से वह जड़ता समाप्त हो गई है । अब तुम्हारे अन्दर वही नये-नये भावों को प्रकट करने वाली प्रतिभा से युक्त बुद्धि विकसित हो गई है ।

इला—कविश्रेष्ठ ! सूर्य और चन्द्रमा को भी राहु ग्रस लेता है । ग्रहण के समाप्त होने पर उनका वही प्रकाश दीप्तिमान् होता है । मलिनता के दूर होने पर स्वच्छ दर्पण में पड़ा प्रतिबिम्ब पहले के समान दृष्टिगोचर होता है । विधि के अनुकूल होने पर मनुष्य मन के रञ्जन को पाता ही है ।

कालिदास—सन्यासी ने पुनः कहा—"पुत्र ! तुमको विद्या प्राप्त करने के लिये परिश्रम करना चाहिये । प्रतिभा से तुम शिवदास से भी अधिक विद्या और

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अस्ति नातिदूरे देवग्रामाच्च द्विक्रोशान्तरालवर्ति रामगिरेरुपत्यकासु वेणुगङ्गायास्तीरे कुलपतेः वामदेवस्य आश्रमपदं गुरुकुलम् ।"

**विद्योत्तमा**—तत्तु विद्याध्ययनाभिलाषिणामभिलषणीयं विद्यातीर्थम् । भाग्यशालिन एव तत्र प्रवेशं लभन्ते ।

**कालिदासः**—तत्र वेद-वेदाङ्ग-ब्राह्मण-आरण्यक-उपनिषत्-सूत्र-स्मृति-धर्मशास्त्र-अर्थशास्त्र-राजशास्त्र-पुराण-साहित्य-काव्य-कला-कोष-विविधज्ञानादीनां च शिक्षायाः प्रबन्धः । देशदेशान्तरेभ्यः समागताः छात्रास्तत्र विद्याध्ययनं कुर्वन्ति । समित्पाणिस्त्वं कुलपतिं वामदेवं प्रणम्याध्ययनं प्रारभस्व । दुष्करेऽपि तत्र गुरुकुले प्रवेशे प्रतिभाप्रभावेण ते प्रभावित आचार्यस्त्वामन्तेवासिनं करिष्यत्येव ।

**विद्योत्तमा**—इदं मे सौभाग्यमेव बभूव ।

---

कीर्ति को प्राप्त करोगे । यहाँ से समीप ही और देवग्राम से दो कोस दूर रामगिरि पर्व की उपत्यकाओं में वेणुगंगा के तट पर कुलपति वामदेव का आश्रम और गुरुकुल है ।"

**विद्योत्तमा**—वह तो विद्याध्ययन के अभिलाषी छात्रों के लिये अभिलषित विद्यातीर्थ है । भाग्यशाली ही वहाँ प्रवेश पाते हैं ।

**कालिदास**—वहाँ वेद, वेदाङ्ग, ब्राह्मण, आरण्यक, उपनिषद्, सूत्र, स्मृति, धर्मशास्त्र, अर्थशास्त्र, राजशास्त्र, पुराण, काव्य, साहित्य, कला, कोश आदि विविध ज्ञान और विज्ञान की शिक्षा दी जाती है । यहाँ देश-देशान्तरों से छात्र विद्या प्राप्त करने आते हैं । समित्पाणि होकर तुम कुलपति वामदेव को प्रणाम करके अध्ययन प्रारम्भ कर दो । इस गुरुकुल में प्रवेश कठिन है । तथापि तुम्हारी प्रतिभा से प्रभावित आचार्य तुमको अपना शिष्य बना ही लेंगे ।

**विद्योत्तमा**—अहो ! यह मेरा सौभाग्य ही था ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कालिदासः**—ततश्च स परिव्राड् मे करयोः ललाटस्य च रेखाः परिगणय्य प्रावोचत्—"वत्स ! त्वयि जन्मजन्मान्तरसंस्कारशालिनी महीयसी काव्यप्रवर्तिनी प्रतिभा । तव सरसाः भावप्रवणाः सहृदयहृदयाह्लादिन्यश्च मनोरमाः कविताः युगान्तराणि यावज्जनान् माधुर्येणाऽऽप्लावितान् करिष्यन्ति । यावच्चन्द्रदिवाकरं ते यशः सुस्थिरं स्थास्यति ।

**इला**—विधेर्विधानं त्वविचल भवति । कथितं च—

विधेर्विधानं न हि कैश्चिदत्र जनैः परावर्तयितुं सशक्यम् ।
लक्षं जनाः वीरवराः प्रमत्ताः बभूवुरेवंविहतप्रयत्नाः ॥

कविप्रवर ! ततश्च किं संवृत्तम् ?

**कालिदासः**—ततश्चाऽहं कुलपतेः वामदेवस्य गुरुकुलाश्रममगच्छम् । बुद्धि परीक्ष्य स मां स्वशिष्यरूपेणानुगृहीतवान् । तत्रभवतो मया विविध-साहित्य, शास्त्राणि विज्ञानानि चाधीतानि । न जाने कीदृशी दैवी प्रेरणा,

---

**कालिदास**—तदनन्तर उस सन्यासी ने मेरे हाथों और मस्तक की रेखाओं की गणना करके कहा—"पुत्र ! तुममें जन्म-जन्मान्तरों के संस्कारों से युक्त काव्य-रचना करने वाली महनीय प्रतिभा है । तुम्हारी सरस भावों से भरी हुई, सहृदयों के हृदयों को आह्लादित करने वाली मनोरम कवितायें युगों तक अपनी मधुरिमा से सहृदयों को तृप्त करेंगी । जब तक चन्द्र और दिवाकर रहेंगे, तब तक तुम्हारी कीर्ति स्थिर रहेगी ।

**इला**—विधि का विधान अविचल ही होता है । किसी ने कहा भी है—

विधि के इस विधान को बदला नहीं जा सकता ।
लाखों घमण्डी मिट गये अपने बल के गर्व में ॥

कविश्रेष्ठ उसके बाद क्या हुआ ?

**कालिदास**—उसके बाद मैं कुलपति वामदेव के गुरुकुल में गया । बुद्धि की परीक्षा करके उन्होंने मुझको शिष्य बनाने की कृपा की । वहाँ पाँच वर्षों तक मैंने विविध साहित्य, शास्त्रों और विज्ञानों का अध्ययन किया । न जाने कौनसी दैवी प्रेरणा,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतिभा, शक्तिर्वा मयि प्रादुर्बभूव, यद् दृष्टमधीतं, श्रुतं, पठितं वा सकलं तस्मिन्नेव काले मे बुद्धौ स्थिरतामवाप। कदाचिदपि न चाऽहं तद् व्यस्मरम्। नूतनाः भावाः मम हृदये मनसि च स्फुरिता अभवन्। अङ्कुरिताश्चापि काव्यसंरचनायै प्रेरणाः।

इला—विधेरयं महाननुग्रहः।

कालिदासः—पञ्चवर्षानन्तरं कुलपतिर्मामाशीर्वचोभिरनुगृह्य समादिशत्—"वत्स! अधिगतास्त्वया सकलाः विद्याः। कृतमध्ययनम्। सम्प्रति प्रारभस्व कामपि काव्यरचनाम्।"

इला—भवतो रसाप्लुताभिः कविताभिस्तु जनाः सहृदया अपि हृतहृदयाः विमोहिताः भवन्ति।

कालिदासः—कवितानां विस्फुरणकाले राजकुमार्याः विद्योत्तमायाः सौन्दर्य-लावण्यरूपसमुज्ज्वलं प्रतिभाप्रदीप्तं वदनं मे नूतनप्रेरणानां भावानां च

---

प्रतिभा, या शक्ति मुझमें उत्पन्न हुई थी कि मैं जो कुछ देखता, सुनता या पढ़ता था, वह उसी समय मेरी बुद्धि में स्थिर हो जाता था। वह कभी भूलता नहीं था। मेरे मन में नये-नये भाव उदित होते थे और काव्य-रचना की प्रेरणा अङ्कुरित हुई।

इला—विधि का यह महान् अनुग्रह था।

कालिदास—पाँच वर्ष के बाद कुलपति ने मुझको आशीर्वाद के साथ आदेश दिया—"वत्स! तुमने सारी विद्यायें पढ ली हैं। तुम्हारा अध्ययन पूरा हो गया है। अब तुम काव्य-रचना आरम्भ करो"।

इला—आपकी रस से सम्भृत कवितायें तो सहृदयों के हृदयों का हरण करके उनको विमोहित कर रही हैं।

कालिदास—कविता के विस्फुरण के समय राजकुमारी विद्योत्तमा का सौन्दर्य-लावण्य से उज्ज्वल और प्रतिभा से प्रदीप्त मुख मेरे लिये नई प्रेरणाओं का स्रोत होता

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्रोत एव अभूत्। काव्यानां नाटकानां च नायिकासु मनोरञ्जनायाः राजकुमार्याः एव विविधसौन्दर्यस्वरूपाणां कल्पनाः वर्तन्ते।

**विद्योत्तमा**—अहो आर्यपुत्र! मयि भवतामयं स्नेहातिशयः।

**कालिदासः**—अयं स्नेहातिशय एव मे काव्यरचनानां प्रेरणास्रोतः। सम्पर्के सत्यपि अल्पावधिके राजकुमारी इयं मम अन्तःकरणेषु स्वप्नेषु कल्पनासु च सदैव विराजते। अत्र मेघदूतगीतिकाव्यं प्रमाणम्।

**विद्योत्तमा**—आर्यपुत्र! क्व ते मयि तादृशोऽनुरागः, स्नेहोऽनुकम्पा भावप्रवणैकनिष्ठता, क्व च ममेयं निष्ठुरता, निर्दयता, निर्घृणता, हृदयहीनता, क्रूरता। हा! किमेतन्मया विहितम्?

**इला**—कविप्रवर! राजकुमारी भवतामेकं नाटकं शकुन्तलोपाख्यानसम्बन्धि प्रशंसत्यतिशयेन।

**कालिदासः**—तस्य नाटकस्य एकएवाङ्कः मया लिखितः। सम्राजो विक्रमा-

---

था। काव्यों और नाटकों की नायिकाओं में मन का रञ्जन करने वाली राजकुमारी की ही विविध रूपों में कल्पना है।

**विद्योत्तमा**—अहो! आर्यपुत्र! आपका मेरे प्रति प्रेम का अतिशय है।

**कालिदास**—यह स्नेह का अतिशय ही मेरे काव्यों की रचना का प्रेरणा-स्रोत है। सम्पर्क के अत्यल्प होने पर भी राजकुमारी मेरे अन्तःकरण में, स्वप्नों में और कल्पनाओं में सदा विद्यमान रहती हैं। मेघदूत काव्य इसका प्रमाण है।

**विद्योत्तमा**—आर्यपुत्र! कहाँ तो आपका मेरे प्रति ऐसा अनुराग, स्नेह, अनुकम्पा, भावप्रवणता और एकनिष्ठता है और कहा आपके प्रति मेरी यह निष्ठुरता, निर्दयता, निर्घृणता, हृदयहीनता और क्रूरता रही। हाय, यह मैंने यह क्या किया?

**इला**—कविश्रेष्ठ! राजकुमारी आपकी एक रचना शकुन्तला की कथा की बहुत प्रशंसा करती है।

**कालिदास**—मैंने अभी तक उस नाटक का एक ही अंक लिखा है। सम्राद्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दित्यस्यादेशो, यज्ज्येष्ठमासस्य पूर्णिमायामभिनेतुमेकं नवीनं नाटकमुपस्थातव्यमस्माभिः।

**विद्योत्तमा**—अहो, ग्रीष्मर्तोः वर्णनेन सह नाटकस्यास्य प्रारम्भः।

**कालिदासः**—आम् राजकुमारि! तत्र नायिकायाः शकुन्तलायाः सौन्दर्ये भवत्या एव रूपस्याभिव्यञ्जना। यदि भवती कस्यचिन्महर्षेस्तपोवने पालिता यौवनेन अशोभिष्यत, तत्रत्यांश्च पादपान् लताः वल्लरीश्च असेक्ष्यत, तदानीन्तनमेव सौन्दर्यं मया तत्र कल्पितम्। अनुपमानानघानिन्द्यनैसर्गिकसौन्दर्यमयी शकुन्तला भवत्या एव रूपमभिव्यनक्ति।

**विद्योत्तमा**—मालविकाग्निमित्रं, विक्रमोर्वशीयं च...।

**कालिदासः**—भवती जानात्येव एतन्नाटकद्वयम्।

**इला**—परन्तु, राजकुमारी...।

---

विक्रमादित्य का आदेश है कि ज्येष्ठ मास की पूर्णिमा पर अभिनय करने के लिये हमे एक नाटक की रचना करनी चाहिये।

**विद्योत्तमा**—आर्यपुत्र! सम्भवतः इसीलिये नाटक का प्रारम्भ ग्रीष्म ऋतु के वर्णन के साथ हुआ है।

**कालिदास**—हाँ, राजकुमारि! उस नाटक की नायिका शकुन्तला के सौन्दर्य में आपके ही सौन्दर्य की अभिव्यक्ति है। यदि आप किसी महर्षि के तपोवन में पलकर युवती होती, वहाँ के वृक्षों को सींचती, उस अवस्था में उस सौन्दर्य का अनुमान किया जा सकता है। उस अनुपम, अनघ, अनिन्द्य, नैसर्गिक सौन्दर्य की स्वामिनी शकुन्तला में आपका ही सौन्दर्य है।

**विद्योत्तमा**—मालविकाग्निमित्र और विक्रमोर्वशीय...।

**कालिदास**—इन दोनों नाटकों से भी आप परिचित ही हैं।

**इला**—परन्तु राजकुमारी ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कालिदासः**—सत्यम् । अग्निमित्रस्य मालविकायाः कलात्मकं सौन्दर्यं, पुरुरवसश्च उर्वश्या दिव्यसौन्दर्यसमन्वितमभिनयनैपुण्यं विद्योत्तमाया एव ।

(विद्योत्तमा अरुणाभा सलज्जं वदनमवनमयंति) ।

**इला**—कविप्रवर ! कथितमासीद् भवद्भिर्यद् राजकुमार्याः प्रश्नस्य विशदोत्तरं अन्तः प्रविश्य भविष्यति ।

**कालिदासः**—कथं न, अवश्यम् । प्रश्नस्योत्तरमुपस्थाप्यते । (इरावतीमुद्दिश्य) इले ! बाह्यद्वारे तिष्ठति मे सेवको देवदासः पुस्तकहस्तः । तस्मात् सर्वाण्येव पुस्तकान्यानेयानि ।

(इरावती बहिर्गच्छति)

**कालिदासः**—(मञ्चिकानिहितानि पुस्तकान्यवलोक्य) अहो इमानि पुस्तकानि ?

**इला**—कविप्रवर ! भवत एव कृतयः । राजकुमार्यै अतिशयेन रोचन्ते । बहुप्रयासैरुज्जयिनीत आनायिताः ।

(कवेर्हस्तयोरर्पयति)

---

**कालिदास**—सत्य है । अग्निमित्र की मालविका का कलात्मक सौन्दर्य और पुरुरवा की उर्वशी का दिव्य सौन्दर्य से युक्त अभिनय-नैपुण्य सब विद्योत्तमा का ही है ।

(विद्योत्तमा लज्जा से लाल होकर मुख को नीचा कर लेती है)

**इला**—कविश्रेष्ठ ! आपने कहा था कि राजकुमारी के प्रश्न का विशद उत्तर आप अन्दर प्रवेश करके देंगे ।

**कालिदास**—क्यों नहीं, अवश्य । इस प्रश्न का उत्तर यह है । (इरावती की ओर लक्ष्य करके) इरावती ! बाहर दरवाजे पर पुस्तकों को हाथों में लिये हुये मेरा सेवक खड़ा है । उसके हाथों से पुस्तकें ले आओ ।

(इरावती बाहर जाती है)

**कालिदास**—(मञ्चिका पर रखी पुस्तकों को देख कर) अहो ये पुस्तकें ?

**इला**—कविश्रेष्ठ ! ये आपकी ही रचनायें हैं । राजकुमारी को बहुत प्रिय हैं । बहुत प्रयत्न करके उज्जयिनी से लाई गई हैं । (कवि के हाथों में देती है) ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कालिदासः—(पुस्तकानि गृहीत्वा) अहो ! कवितासु भवत्याः... ।

इला—इयं राजकुमारी कवितास्वेतासु आत्मन एवास्तित्वमनुभवति ।

कालिदासः—स्वच्छेऽन्तःकरणे सद्भावोद्रेकः स्वयमेव सञ्जायते ।

(पुस्तकानि निदधाति । राजकुमारी सलज्जं मुखमवनमयति । इरावती पुस्तकानि गृहीत्वाऽन्तः प्रविश्य मञ्चिकायां संस्थाप्य स्वयमेकस्मिन् कोणे तिष्ठति) ।

कालिदासः—इले ! राजकुमार्याः प्रश्नस्योत्तरं काव्यान्येतानि । "अस्ति-कश्चिद्-वाग्विशेष" इति त्रिभिः पदैः त्रीणि काव्यानि मया विरच्यन्ते ।

इला—अहो ! कवेः प्रतिभा, विद्वत्त्वं, परिश्रमश्च ।

कालिदासः—अत्र 'अस्ति'पदेन कुमारसम्भवम्, 'कश्चित्'-पदेन मेघदूतम्,

---

कालिदास—(पुस्तकें लेकर) अहो !, कविताओं के प्रति आप... ।

इला—राजकुमारी कहती हैं कि इन कविताओं में मुझको अपना ही अस्तित्व अनुभव होता है ।

कालिदास—स्वच्छ अन्तःकरण में स्वच्छ भावों का उद्रेक स्वयं ही हो जाता है ।

(पुस्तकें रख देता है । राजकुमारी शरमा कर मुख नीचा कर लेती है । इरावती पुस्तकें लेकर अन्दर प्रवेश करती है । उनको मञ्चिका पर रख कर स्वयं एक कोने में खड़ी हो जाती है) ।

कालिदास—इले ! राजकुमारी के प्रश्न का उत्तर ये पुस्तकें हैं । "अस्ति कश्चिद वाग्विशेषः" में तीन पद हैं । इनको लेकर मैं तीन काव्यों की रचना कर रहा हूँ ।

इला—कवि की महान् प्रतिभा, विद्वत्ता और परिश्रम आश्चर्यजनक हैं ।

कालिदास—"अस्ति" पद से 'कुमारसम्भव', "कश्चित्" पद से 'मेघदूत' और "वाक्"

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

'वाग्'पदेन च रघुवंशम् इति काव्यानि प्रारभ्यन्ते गीतिकाव्यं मेघदूतं तु विरचितम् । परमपरे द्वे पूरयितव्ये ।

**विद्योत्तमा**—कथमेतेषां प्रारम्भः ?

**कालिदासः**—(एक पुस्तकमुत्थाप्य) अस्मिन् कुमारसम्भवमहाकाव्ये भगवत्याः पार्वत्याः भगवतः शङ्करस्य च तपःप्रभावेण अनुष्ठिताद् विवाहादुत्पन्नस्य कुमारकार्तिकेयस्य कथा तारकासुरविषयिका वर्णनीया । घटनायाः पुण्यस्थलं हिमालयः । अस्तिपदेन चोपक्रमः—

> अस्त्युत्तरस्यां दिशि देवतात्मा
> हिमालयो नाम नगाधिराजः ।
> पूर्वापरौ तोयनिधी वगाह्य
> स्थितः पृथिव्या इव मानदण्डः ॥

---

पद से 'रघुवंश' की रचना प्रारम्भ की गई है । मेघदूत तो पूरा लिख लिया है, परन्तु कुमारसम्भव और रघुवंश पूरे करने हैं ।

**विद्योत्तमा**—इनका प्रारम्भ कैसे हुआ है ?

**कालिदास**—(एक पुस्तक उठा कर) इस कुमारसम्भव महाकाव्य में भगवती पार्वती और भगवान् शंकर की तपस्या के प्रभाव से सम्पन्न विवाह से उत्पन्न कुमार कार्तिकेय की कथा (तारकासुर-वध-कथा) का वर्णन होगा । इसकी घटना का पुण्य-स्थान हिमालय है । इसका प्रारम्भ है—

> अस्ति उदीची भारत भू के
> देवगणों का आत्मस्थान ।
> पर्वतराज हिमालय शोभित
> भारतीय गौरव का गान ॥
> पूरब पश्चिम जलनिधि का जो
> नित ही करके अवगाहन ।
> मानदण्ड सा अविचल निश्चल
> धरती का है अवलम्बन ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रिये ! स्वीकारेणानुगृह्णातु माम् ।

**विद्योत्तमा**—(अभ्युत्थाय पुस्तकं हस्ते गृहीत्वा शिरसा संस्पृश्य) आर्यपुत्र ! अतिशयेनानुगृहीतास्मि । (तिष्ठति) ।

**कालिदासः**—(द्वितीयं पुस्तकमादाय) अस्मिन् रघुवंशाख्ये महाकाव्ये रघूणामन्वयो वक्ष्यते । अत्र भगवता विष्णुना रामरूपेणवतीर्णम् । रघुवंशे शब्दार्थयोः रसभावानामनुपमेन समन्वयेन सह भारतीयसंस्कृतेः स्वरूपमादर्शश्च सम्यगुपस्थापयिष्यन्ते ।

**विद्योत्तमा**—तत्कथम् ?

**कालिदासः**—महाकाव्यमेतद् वाक्पदेन प्रारभ्यते—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।

---

प्रिये ! इसको स्वीकार करने की कृपा करे ।

**विद्योत्तमा**—(उठ कर पुस्तक को लेकर सिर के साथ स्पर्श करके) आर्यपुत्र ! मैं बहुत अधिक अनुगृहीत हुई हूँ । (बैठ जाती है) ।

**कालिदास**—(दूसरी पुस्तक उठा कर) इस रघुवंश नामक महाकाव्य में रघुवंश का वर्णन होगा । इस वंश में भगवान् विष्णु ने राम के रूप में अवतार लिया था । इस काव्य में शब्द-अर्थ, रस-भाव आदि के अनुपम समन्वय के साथ ही भारतीय संस्कृति का स्वरूप और आदर्श उचित प्रकार से उपस्थित किये जायेंगे ।

**विद्योत्तमा**—वह कैसे ?

**कालिदास**—यह काव्य "वाग्" पद से प्रारम्भ होता है—

वागर्थ का संयोग जिनके मिलन का उपमान है ।
संसार के माता-पिता जो लोक के भगवान् हैं ॥
वागर्थ का ही बोध पाने आपकी कर जोड़ कर ।
वन्दना मैं कर रहा हूँ पार्वती-परमेश्वर ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रिये ! स्वीकुरु। एषोऽपि महाकाव्यप्रारम्भः।

विद्योत्तमा—(अभ्युत्थाय पुस्तकं करयोः गृहीत्वा शिरसा संस्पृश्य) आर्यपुत्र ! अत्यन्तमनुगृहीताऽस्मि। (तिष्ठति)।

कालिदासः—(तृतीयं पुस्तकमादाय) राजकुमारि ! अवलोकनीयं तावन्मेघदूताख्यं गीतिकाव्यम्। इयं कृतिस्तु धरणीरशनीकृतान् मध्यदेशभूभागादारभ्य हिमगिरिपर्यन्तमतिदुष्करपथपर्यटनसम्भवप्रकृतिनिरीक्षणफलम्। अत्र कान्ताविरहवेदनाविह्वलस्य परिक्लिश्यमानदूयमानहृदयस्य कस्यचिद् यक्षस्य अतिसूक्ष्मानुभूतयः सहृदयहृदयानि करुणरसविगलितानि कुर्वन्ति। एतस्य गीतिकाव्यस्यानेकानि पद्यानि पूर्वमेव प्रथितानि लोके। रचनायाश्च कोऽप्यपूर्व इतिहासः।

इला—कीदृशः ?

कालिदासः—बहुतिथे व्यतीते काले उत्तराखण्डतीर्थयात्राव्याजेन आत्मानं

---

प्रिये ! इस महाकाव्य के प्रारम्भ को भी स्वीकार कीजिये।

विद्योत्तमा—(उठ कर पुस्तक को हाथों में लेकर सिर से स्पर्श करके) आर्यपुत्र ! मैं अत्यधिक अनुगृहीत हुई हूँ। (बैठ जाती है)।

कालिदास—(तीसरी पुस्तक को उठा कर) प्रिये ! राजकुमारि ! मेघदूत नाम के इस गीतिकाव्य को देखिये। इसको मैंने पृथिवी की करधनी बने मध्य देश से लेकर हिमालय पर्वत तक अति कठिन मार्गों पर पर्यटन करके और प्रकृति का निरीक्षण करके लिखा है। इसमें प्रिया के विरह की पीड़ा से विह्वल, क्लिसते तथा दुःखी होते किसी यक्ष की कथा है। ये अति सूक्ष्म अनुभूतियाँ सहृदयों के हृदयों को करुणा से विगलित कर देती हैं। इसकी रचना का एक अपूर्व इतिहास है।

इला—क्या है ?

कालिदास—बहुत समय पहले मैंने उत्तराखण्ड की यात्रा द्वारा अपने को पवित्र करने

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पावयितुं मया हिमगिरिरामणीयकावलोकनाभिलाषिणा केदारनाथस्य भगवतो नीललोहितस्य धाम इति केदारनाथं प्रति प्रस्थितम् ।

**विद्योत्तमा**—अत्र तु स्वयं पार्वतीनाथो भगवान् नीलकण्ठो भगवत्या पार्वत्या सह निवसति ।

**कालिदासः**—कनखलोत्तरवर्ती सकल हिमालयप्रदेशस्तस्य निवासः। अत्रत्यानि धवलहिममण्डितगिरिशिखराणि रजनीषु शशिज्योत्स्नावदातानि द्रवीभूतरजतावलिप्तानीव चन्द्रबिम्बं प्रतिबिम्बयन्ति। इत्थं च तानि शशिशेखरमालालङ्कारधारिणो नीलकण्ठस्य शशिभृदिति नाम सार्थकं कुर्वन्ति। शिवशेखरभूतेन चन्द्रमसा रजनीषु प्रकाश्यमानास्ते प्रदेशाः अतिशयेन रमणीयाः प्रतीयन्ते।

**विद्योत्तमा**—अहो हिमालयस्य सौन्दर्यं महिमा च। अथ कथं भवतो यात्रेयं सम्पन्ना।

---

के लिये और हिमालय पर्वत के सौन्दर्य का अवलोकन करने के लिये भगवान् शिव के धाम के रूप में प्रसिद्ध केदारनाथ की ओर प्रस्थान किया था।

**विद्योत्तमा**—जहाँ स्वयं गौरी के पति भगवान् शिव भगवती पार्वती के साथ निवास करते हैं ?

**कालिदास**—कनखल से उत्तर में सारा ही हिमालय उनका निवास है। यहाँ के शुभ्र हिम से मण्डित पर्वत-शिखर रात्रियों में चाँदनी से निर्मल, अतः मानो पिघले स्वर्ण से लिये हुये से चन्द्रमण्डल को प्रतिबिम्बित करते हैं। इस प्रकार वे चन्द्रमा को शिरोभूषण के रूप में मस्तक का अलङ्कार बनाने वाले शिव के (शशिभृत्) नाम को सार्थक करते हैं। शिवशेखर रूप उस चन्द्रमा से रात्रियों में प्रकाशित वे प्रदेश बहुत अधिक रमणीय हो जाते हैं।

**विद्योत्तमा**—हिमालय का सौन्दर्य और महिमा आश्चर्यजनक हैं। उसके बाद आपकी यात्रा कैसे पूरी हुई ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कालिदासः**—मयैकाकिना पदातिनैव सम्पादिता सकला यात्रा। प्रथमं तावदहमाचार्यचरणारविन्देभ्यः सचरणस्पर्शं प्रणामाञ्जलीनुपहारीकृत्य, रामगिरिं परिक्रम्य, जन्मभूमिरूपं देवग्रामं प्रणम्य, वेणुगङ्गातीरवर्तिन्याः कालीदेव्याश्च चरणयोर्निपत्य उत्तरपश्चिमामाशां प्रतस्थे।

**इला**—रामगिरेरुत्तरपश्चिमामाशाम् ?

**कालिदासः**—वाढम्। सरसनिचुलान् रामगिरिपर्वतप्रदेशान्, मालाख्यप्रदेशे परिणतफलैः काननाम्रैरुपशोभितम् आम्रकूटपर्वतं विन्ध्यादे विशीर्णां रेवां कुकुभसुरभिणश्चानेकान् गिरितटान्यतिक्रम्य दशार्णदेशं समाससाद।

**विद्योत्तमा**—अहो! दशार्णदेशः? यत्र चलोर्मिवेत्रवतीतटवर्तिनी विदिशालक्षणा राजधानी। अस्याः प्रान्तभागेषु शिलावेश्मशोभितप्रौढपुष्पकदम्बालङ्कृतो नीचैराख्यो गिरिः।

**कालिदासः**—वाढम्। ततश्च दुर्दान्तरक्ताननशकशातनयज्ञदीक्षादीक्षितस्य

---

**कालिदास**—मैंने अकेले ही पैदल सारी यात्रा पूरी की। सबसे पहले आचार्य महोदय के चरण कमलों में प्रणामों की अञ्जलियों का उपहार देकर, रामगिरि की परिक्रमा करके, जन्मभूमि को प्रणाम करके, और वेणुगङ्गा के तट पर देवग्राम में स्थित काली देवी के चरणों में गिर कर मैंने उत्तर पश्चिम दिशा की ओर प्रस्थान किया।

**इला**—रामगिरि से उत्तर-पश्चिम दिशा में ?

**कालिदास**—हाँ! सरस निचुलों से भरे रामगिरि पर्वत की भूमियों को, माल नामक प्रदेश में पड़े हुये जंगली आमों से सुशोभित आम्रकूट पर्वत को, विन्ध्य पर्वत की तलहटियों में फैली नर्मदा नदी को और अर्जुन वृक्षों से सुशोभित अनेक पर्वतों को लाँघकर दशार्ण देश में पहुँच गया।

**विद्योत्तमा**—अहो दशार्ण देश ? जहाँ चञ्चल लहरों वाली वेत्रवती नदी के तट पर विदिशा नाम की राजधानी है। इसके प्रान्त भाग में अनेक गुफाओं से अलङ्कृत तथा पुष्पित कदम्बों से सुशोभित नीच नामक पर्वत है।

**कालिदास**—हाँ। उसके अनन्तर प्रचण्ड लाल मुखों वाले शकों के विनाश करने

CC-0. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विक्रमादित्यस्य राजधान्या अवलोकनसमुत्सुकोऽहं मार्गस्य वक्रत्वेऽपि निर्विन्ध्यामतिक्रम्य अवन्तिदेशप्रान्तरान् अवगाह्यन् श्रीविशालामुज्जयिनीं समाससाद ।

**विद्योत्तमा**—अहो ! विक्रमादित्यराजधानी, यत्र शिप्रातटवर्तिनि महाकाल-मन्दिरे क्वणितरशनाः देवदास्यो नर्तनैश्चण्डीश्वरमर्चयन्ति ? वीरविक्रमा-दित्येन सह सन्धिसमुत्सुकेन जनकेन सह मयाऽपि कतिपयवत्सरपूर्वं सा राजधानी अवलोकिकता, भगवान् महाकालश्चार्चितः ।

**कालिदासः**—तत्र महाकालं चण्डीश्वरं प्रणम्य विगलितपथपरिक्लमः श्रीविशा-लायाः सौन्दर्यवैभवेन परितृप्तहृदयनयनः पुनरप्युत्तराशां प्रतस्थे । ततश्त गम्भीरामुत्तीर्य देवगिरौ भगवन्तं स्कन्दं सम्पूज्य चर्मण्वतीं सरित-मनुप्राप्तः ।

**विद्योत्तमा**—सेयं सरिच्चर्मण्वती, या रन्तिदेवयज्ञे सुरभितनयानां गवामाल-म्भनेन शोणितप्रवाहैः समुद्भूता ?

---

रूप यज्ञ की दीक्षा लेने वाले विक्रमादित्य की राजधानी को देखने के लिये उत्सुक होकर मैं मार्ग के कुछ घूम जाने पर भी निर्विन्ध्या नदी को पार करके अवन्ती देश की राजधानी श्रीविशाला उज्जयिनी में पहुँचा ।

**विद्योत्तमा**—अहो ! विक्रमादित्य की राजधानी ? यहाँ शिप्रा नदी के तट पर विद्यमान महाकाल के मन्दिर में करधनी को बजाती हुई देवदासियाँ नृत्य द्वारा चण्डीश्वर शिव की अर्चना करती हैं । वीर विक्रमादित्य के साथ सन्धि करने के लिये उत्सुक पिता के साथ मैंने भी कुछ वर्ष पूर्व वह राजधानी देखी थी और महाकाल को प्रणाम किया था ।

**कालिदास**—विशाला के सौन्दर्य और वैभव से हृदय और नेत्रों को तृप्त करके वहाँ चण्डीश्वर शिव को प्रणाम करके मार्ग की थकावट को दूर करके पुनः उत्तर दिशा की ओर प्रस्थान करके गम्भीरा नदी को पार करके देवगिरि पर्वत पर भगवान् कार्तिकेय को प्रणाम करके मैं चर्मण्वती (चम्बल) नदी के तट पर पहुँच गया ।

**विद्योत्तमा**—यह वही चर्मण्वती (चम्बल) नदी है, जो रन्तिदेव के यज्ञ में गौओं के आलम्बन (बलि) में रुधिर के प्रवाहों से उत्पन्न हुई थी ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कालिदासः**—सत्यमेव कथयति भवती।

**विद्योत्तमा**—अपि किं सत्यमेव रन्तिदेवेन गवां वधो विहितः, आर्यपरम्परासु किं यज्ञेषु गवामपि वधो महर्षिभिरनुमतः ?

**कालिदासः**—(दक्षिणं करमुरसि निधाय आर्तस्वरेण) न हि, न हि, न कथमपि गवां वधस्य संविधानम् ? मासभक्षणव्यसनिभिः कैश्चिदपि क्रूरहृदयैः पाखण्डिभिः पुरोहितपदधारिभिः आलम्भनपदस्य वध इत्यर्थः समुद्घाटितः। परं यज्ञक्रियासम्पादनार्थं गोघृतदुग्धदधिसम्मिश्रितमधुपर्कादय इष्यन्ते यज्ञेषु। तदर्थं यज्ञवाटेषु गावः सन्निधीयन्ते। गवामालम्भनमेतदेव।

**विद्योत्तमा**—इदमेव सत्यम्।

**कालिदासः**—ततश्च चर्मण्वतीमुत्तीर्य दशपुरग्राम्यवधूनां नयनकौतूहलं निरीक्षमाणोऽहं सरस्वतीदृषद्वत्योरन्तरे स्थितं ब्रह्मावर्तजनपदमवलोकयन् अहं कुरुक्षेत्रमाससाद।

---

**कालिदास**—आप ठीक कहती हैं।

**विद्योत्तमा**—क्या सत्य ही रन्तिदेव ने गौओं का वध किया था ? आर्य धर्म की परम्पराओं में यज्ञों में क्या ऋषियों ने गौओं के वध की अनुमति दी थी ?

**कालिदास**—(दाहिने हाथ को वक्ष पर रख कर) नहीं नहीं। गौओं के वध का विधान कहीं नहीं है। मांस-भक्षण के व्यसनी किन्हीं क्रूर हृदय वाले पाखण्डी पुरोहितों ने आलम्भन पद का अर्थ वध कर दिया। यज्ञीय क्रियाओं का सम्पादन करने के लिये यज्ञों में गौ के घी, दूध और दही से मिश्रित मधुपर्क की आवश्यकता होती है। इसके लिये यज्ञशालाओं में गौयें रखी जाती थीं। यही गौओं का आलम्भन है।

**विद्योत्तमा**—उसके बाद ?

**कालिदास**—तदनन्तर चर्मण्वती को पार करके दशपुर जनपद के ग्रामों की वधुओं के नेत्रों के कुतूहल को देखता हुआ मैं सरस्वती और दृशद्वती नदियों के मध्य में स्थित ब्रह्मावर्त जनपद में घूमता हुआ कुरुक्षेत्र पहुंच गया।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—पुण्यभूमिः कुरुक्षेत्रम् इदं तु सरस्वत्याः पावनैः जलैः पवित्री-क्रियते। अत्र महाभारते युद्धे कौरवीणां चमूनामेकादशाक्षौहिणीनां गाण्डी-वधन्वाशितशरैः स्वर्गगमनपथदर्शको बभूव। सूर्यग्रहणाद्यवसरेषु संख्या-तीताः भगवद्भक्तास्तत्रत्येषु सरोवरेषु स्नानादिकं विधाय पापेभ्यो निर्मुक्ताः पुण्यसंचयाय तत्र समवयन्ति।

**कालिदासः**—तच्चातिक्रम्य दक्षप्रजापतेः प्राचीनराजधानीं कनखलं सम्प्राप।

**विद्योत्तमा**—अहो! कनखलम्। पापविनाशिन्याः सगरतनयस्वर्गसोपान-पंक्तिभूतायाः भागीरथ्याः तटवर्ति नगरमिदम्। अत्र नीललोहितस्य भार्या दक्षपुत्री माया पत्युरपमानमसहमाना पितुः यज्ञकुण्डे हुत्वाऽऽत्मानं सतीनाम्ना प्रथिता बभूव।

**कालिदासः**—तदुत्तरवर्ति जाह्नवीतीरे मायापुरम्।

**विद्योत्तमा**—एतत् तु दक्षेण स्वदुहितुः मायायाः विवाहावसरे नीललोहिताय-महादेवाय यौतुकरूपेणोपहारीकृतम्।

---

**विद्योत्तमा**—पुण्यभूमि कुरुक्षेत्र ? सरस्वती नदी के पावन जल इसको पवित्र करते हैं। यहाँ महाभारत युद्ध में गाण्डीवधारी अर्जुन ने कौरवों की ११ अक्षौहिणी सेनाओं को अपने तीक्ष्ण बाणों से स्वर्ग जाने का मार्ग दिखाया था। सूर्य-ग्रहण आदि अवसरों पर अनेक भगवद् भक्त यहाँ के जलाशयों में स्नान आदि करके पापों से मुक्त होकर पुण्यों का संचय करने के लिये एकत्रित होते हैं।

**कालिदास**—उसको पार करके मैं दक्ष प्रजापति की प्राचीन राजधानी कनखल पहुंच गया।

**विद्योत्तमा**—अहो, कनखल ? यहाँ दक्ष की पुत्री और शिव की पत्नी माया ने पति के अपमान को न सह कर पिता के यज्ञ-कुण्ड में अपनी आहुति देकर सती नाम से प्रसिद्धि पाई थी।

**कालिदास**—उसके उत्तर में जाह्नवी के तट पर मायापुर है।

**विद्योत्तमा**—इसको दक्ष ने अपनी पुत्री माया के विवाह के अवसर पर शिव के लिये दहेज के रूप में प्रदान किया था।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कालिदासः**—मायापुरं चैतद् गङ्गाद्वारमप्युच्यते। अत्र जनकोत्सङ्गाद् हिमालयादवतरन्ती किशोरी जाह्नवी यौवनमदोन्मत्ता शम्भोः केशग्रहणातुरा गौरीवक्त्रभृकुटिमवलोक्य चाञ्चल्यभावमपहाय गाम्भीर्यं भजते। इदमेव चोत्तराखण्डद्वारम्।

**विद्योत्तमा**—एतदुत्तरवर्ती हिमालयभूभागः पुराणेषु स्वर्गभूमिरिति स्मृतः।

**कालिदासः**—महदाश्चर्यमत्र मया आषाढमासेऽवलोकितम्। मायापुरादुत्तरदिशि प्रवर्तमानाः मेघाः जाह्नवीसलिले प्रतिबिम्बमानाः जलं पातुं व्यवस्यन्तः सुरगजा इव प्रतिभान्ति स्म।

**इला**—अहो! कवेः प्रकृतिसौन्दर्यसूक्ष्मनिरीक्षणवैभवम्।

**कालिदासः**—अनुगङ्गं प्रस्थितेन मया अनेकाः सरिताः, सरितां सङ्गमाः, खनिजरत्नप्रसवभूमीनां पर्वतानां वक्षणाः असंख्यवनौषधितरुलतावल्लरीक्षुपगहनान्युच्चावचान्यरण्यान्यतीत्य केदारमन्दिरस्थलमधिगतम्।

---

**कालिदास**—इस मायापुर को गङ्गाद्वार भी कहते हैं। यहां पिता की गोदी से उतर कर किशोरी जाह्नवी यौवन के मद में भरकर जब शिव के केशों को पकड़ने के लिये आतुर हुई, तो गौरी की वक्र भृकुटि को देखकर चञ्चलता को छोड़कर गम्भीर हो गई। यही स्थान उत्तराखण्ड का प्रवेश-द्वार है।

**विद्योत्तमा**—इसके उत्तर में हिमालय के भूभाग को पुराणों में स्वर्ग कहा गया है।

**कालिदास**—अषाढ के महीने में मैंने वहाँ बहुत आश्चर्यजनक बात देखी। मायापुर से उत्तर दिशा की ओर जाने वाले मेघ गङ्गा के जल में प्रतिबिम्बित होकर जल पीने के लिये प्रवृत्त होते हुये देवताओं के हाथियों के समान प्रतीत होते हैं।

**इला**—कवि का प्रकृति का सूक्ष्म निरीक्षण आश्चर्यजनक है।

**कालिदास**—गङ्गा की धारा के साथ उत्तर की ओर यात्रा करते हुये अनेक नदियों, नदियों के संगमों, खनिजों और रत्नों के उत्पत्ति-स्थान पर्वतीय घाटियों, असंख्य वन्य ओषधियों वृक्षों-लताओं-वल्लरियों-क्षुपों से भरे ऊँचे-नीचे जंगलों को लाँघ कर केदारमन्दिर के स्थल पर पहुँच गया।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्योत्तमा**—अहो केदारमन्दिरम्। प्रसिद्धेयं किंवदन्ती, यदस्य मन्दिरस्य निर्मितिः पाण्डवैः कारिता। अत्र भीमसेनेन निगृह्यमाणो वृषभरूपधारी नीललोहितो भूमौ प्रविश्य पूर्वार्द्धेन नेपालखण्डे निश्चक्राम। तत्र च स पशुपतिरूपेण प्रथितः। पश्चार्द्धस्य च भीमसेनेन निगृह्यमाणत्वात् स्तम्भितस्तत्रैव स्थिरोऽभूत्।

**कालिदासः**—सत्यमेवोद्घाटितं भवत्या। अद्यापि तत्र वृषभरूपो नीललोहितः पश्चार्द्धेनैव शिलारूपेण स्थितः। तथैव च स भक्तजनैरर्च्यते। परितोऽत्युच्चैः शुभ्रहिममण्डितशिखरेभ्यः प्रस्रवन्तीनां तरलमौक्तिकावलिद्युति-विडम्बिनीनां जलधाराणां प्रपातैः समृद्धसलिला मन्दाकिनी स्वच्छन्दोच्छलदच्छजलैः हर्षविहितस्नाह्निकानां भक्तानां मन्दतां भिनत्ति।

**विद्योत्तमा**—मन्दाकिनीयं सरित् त्रिधारेति पुराणेषु विश्रुतम्। कथमेतत्?

**कालिदासः**—आर्ये! प्रसिद्धिरियमीदृशी। कपिलकोपदग्धानां सगरतनयानां

---

**विद्योत्तमा**—अहो केदारमन्दिर? किम्वदन्ती प्रसिद्ध है कि इसकी रचना पाण्डवों ने कराई थी। यहाँ भीम से पकड़े जाने पर बैल रूपधारी शिव भूमि में प्रविष्ट होकर मुख के भाग से नैपाल में निकले। पिछला भाग भीम द्वारा पकड़े रहने के कारण वहीं स्थिर हो गया।

**कालिदास**—आपने यह सत्य बात कही है। आज भी वहाँ बैलरूपधारी शिव पिछले भाग मे ही स्थित हैं। इसी रूप में भक्त जन उनकी पूजा करते हैं। चारों ओर बहुत ऊँचे शुभ्र हिम से सुशोभित शिखरों से बहती हुई तथा तरल मोतियों की मालाओं की कान्ति को तिरस्कृत करने वाली जल-धाराओं के प्रपातों से समृद्ध जल वाली मन्दाकिनी प्रसन्नता से स्नान आदि दैनिक कार्य करने वाले भक्तों के पापों को स्वच्छन्द उछलते निर्मल जलों से नष्ट करती है।

**विद्योत्तमा**—पुराणों में प्रसिद्ध है कि यह मन्दाकिनी तीन धाराओं वाली है। यह कैसे?

**कालिदास**—आर्ये! यह किम्वदन्ती प्रसिद्ध है कि कपिल मुनि के क्रोध से भस्म हुये

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पितामहानामुद्धाराय तपस्यतो भगीरथस्य भक्तिभावेन प्रसन्ना विष्णुचरण-समुद्भवा ब्रह्मद्रवरूपा सीताधारेति नाम्नापि विश्रुता भगवती गङ्गा धरण्यामवतरन्ती भगवतो नीललोहितस्य जटासु प्रभ्रष्टा । अथ च भगीरथ भक्तितपः प्रभावप्रसन्नेन जटिलेन हिमानीरूपजटाभ्यो निष्कासिता तिसृषु धारासु विभक्ता ।

**विद्योत्तमा**—नामानि च तासां धाराणाम्...।

**कालिदासः**—प्रथमा तावद् धारा भागीरथी भगीरथमनुसरन्ती दक्षिणपश्चिम-दिशि प्रावहत् । गोमुखाभिधा हिमानी च तस्याः प्रभवस्थानम् । दक्षिण-दिशि प्रवहमाना द्वितीया धारा मन्दाकिनी केदारशिखरान्निर्गत्य केदार-मन्दिरं परिवृत्य प्रवहति । तृतीया च शिवालकरूपसतोपन्थहिमानीप्रभवा प्रथमं पूर्वाभिमुखी, तदनन्तर दक्षिणपश्चिमाभिमुखी बदरीवनमवगाहते । तत्र चेयं नरनारायणपर्वतमध्यवर्तिनी बदरीनाथरूपिणो विष्णोश्चरणौ प्रक्षालयति । अलकनन्दा नाम्नी धारेयं विष्णुगङ्गा चापि कथ्यते ।

---

पितामहों (सगर पुत्रों) का उद्धार करने के लिये तपस्या करते हुये भगीरथ की भक्ति से भगवती गङ्गा प्रसन्न हो गईं । विष्णु के चरण से उत्पन्न हुई वे ब्रह्म-द्रवरूप थीं । इनका नाम सीताधारा भी प्रसिद्ध था । पृथिवी पर उतरती हुई वे भगवान् शिव की जटाओं में भटकने लगीं । भगीरथ की भक्ति और तप से प्रसन्न होकर शिव ने उनको अपनी हिमानी रूप जटाओं से निकाला तो वे तीन धाराओं में विभक्त हो गईं ।

**विद्योत्तमा**—उन तीनों धाराओं के नाम क्या थे ?

**कालिदास**—पहली भागीरथी धारा भगीरथ के पीछे-पीछे बह कर दक्षिण-पश्चिम की ओर गई गोमुख नामक हिमानी उसका प्रभव-स्थान रहा । दक्षिण की ओर बहती हुई दूसरी धारा मन्दाकिनी हुई । यह केदारशिखर से उद्भूत होकर केदारमन्दिर को घेरती हुई बहती है । तीसरी धारा शिव के अलकरूप सतोपन्थ हिमानी से निकल कर पहले पूर्व की ओर बह कर तदनन्तर दक्षिण-पश्चिम रुखी होकर बदरीवन का अवगाहन करती है । वहाँ नर-नारायण पर्वतों के मध्य से बहती हुई बदरीनाथरूपी विष्णु के चरणों का प्रक्षालन करती है । अलकनन्दा नाम की इस धारा को यहाँ विष्णुधारा भी कहा जाता है ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इला**—अहो ! एकस्या अपि गङ्गायाः त्रिधा विभागः ।

**कालिदासः**—त्रिधा विभजनेनातिशयं संपीड्यमाना गङ्गा नीललोहितं भगवन्तमर्चयन्ती निर्दिष्टा तेन—"तिस्र एव भगिन्यो यूयम् । उत्तराखण्ड एव सम्मिलनं भविष्यति युष्माकम् । तदनन्तरं धारा एकैव गङ्गा भविष्यति ।"

**इला**—तत्कथम् ?

**कालिदासः**—ब्रह्मसुतनारदतपः साधनस्थले रुद्रक्षेत्रे रुद्रप्रयागे मन्दाकिनीं वक्षस्यालिङ्ग्य अलकनन्दा देवशर्मणो विष्णुचरणभावकस्य तपःस्थले देवप्रयागे सुदर्शनक्षेत्रे भागीरथ्या संगस्यते । ततश्चेमाः सम्मिलितास्तिस्रोऽपि धाराः गङ्गेति वक्ष्यन्ते ।

**इला**—अहो ! महतां महिमानः ।

**कालिदासः**—तदनन्तरं परावर्तमानोऽहं मन्दाकिनीतटवर्तिपथमवलम्बितवान् ।

---

**इला**—अहो ! एक ही गङ्गा के तीन विभाग हो गये ?

**कालिदास**—तीन टुकड़ों में बट जाने के कारण अत्यधिक व्यथित गङ्गा ने शिव की आराधना की । प्रसन्न होकर शिव ने कहा—"तुम तीनों बहनों का उत्तराखण्ड में ही मिलन हो जायेगा । तदनन्तर तुम्हारी एक ही धारा गङ्गा नाम से प्रसिद्ध होगी ।"

**इला**—यह कैसे ?

**कालिदास**—ब्रह्मा के पुत्र नारद की तपस्या के स्थल, मुझ रुद्र के क्षेत्र रुद्रप्रयाग में मन्दाकिनी को वक्ष में समेट कर अलकनन्दा देवप्रयाग में भागीरथी में मिल जायेगी । यह सुदर्शन क्षेत्र है तथा विष्णु के चरणों की आराधना करने वाले देवशर्मा की तपः स्थली होने से देवप्रयाग नाम से प्रसिद्ध हुआ था । तदनन्तर ये तीनों धारायें सम्मिलित रूप से गङ्गा ही कहलायेगी ।

**इला**—महान् व्यक्तियों की महिमायें अद्भुत हैं ।

**कालिदास**—तदनन्तर मैं मन्दाकिनी के तट के साथ-साथ वापिस लौटा । तब मैं

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ च उमायाः बाल्यक्रीडाभिः पाविते हिमशैत्येऽपि यात्रिकजनावगाहनीय-सोष्णसलिलविभूषिततप्तकुण्डालङ्कृतं गौरीकुण्डमतिक्रम्य अल्पेतरान् सरित्सङ्गमान् लङ्घयन् गौरीमठनामकं तीर्थमधिजगाम। अत्र मानसरोवर समुद्भवा सरस्वती मध्यमेश्वरं शिवं परिक्रामन्ती मन्दाकिन्या सङ्गच्छते।

**विद्योत्तमा**—यत्र च सङ्गमान्नातिदूरे सरस्वतीतीरे भगवती काली भक्तजनैः सदा अहर्निशमर्च्यते। लक्ष्मीसरस्वत्योश्चापि तत्रैवाविदूरे मन्दिरे।

**कालिदासः**—अहो! अद्भुतमेव भवत्याः एतद्विषयकः परिचयः। किं भवत्या कदाचित् तानि पुण्यस्थलानि तीर्थयात्रया कृतार्थीकृतानि?

**विद्योत्तमा**—न हि, न हि, न मया तया सौभाग्यशालिन्या बभूवे। पुराणेष्वधीत्य तीर्थयात्रातः निवर्तमानेभ्यो भक्तेभ्यः कर्णपरम्परया विज्ञातम्।

**कालिदासः**—अत्र च हिमालयप्रदेशे पार्वतीपरमेश्वरयोः परमवैभवस्थानानि पुण्यप्रदानि। मन्दाकिनी दक्षिण तटवर्तिनि पर्वतशिखरे गुप्तकाशीति

---

पार्वती की बाल-क्रीड़ाओं से पवित्र गौरीकुण्ड नामक स्थान पर पहुँचा। यह स्थान हिम की शीतलता होने पर भी यात्रियों के स्नान करने योग्य उष्ण जल विभूषित तप्त कुण्डों से अलङ्कृत है। इन तप्त कुण्डों में स्नान करके मैं कालीमठ स्थान पर आया। मानसरोवर से निकली सरस्वती नदी मध्यमेश्वर शिव की परिक्रमा करती हुई यहाँ मन्दाकिनी में मिल जाती है।

**विद्योत्तमा**—और यहाँ इस संगम से कुछ ही दूरी पर सरस्वती के तट पर भगवती काली देवी की अर्चना भक्त जन दिन-रात करते रहते हैं। वहीं समीप में लक्ष्मी और सरस्वती देवियों के भी मन्दिर हैं।

**कालिदास**—आपका इस विषय का ज्ञान अद्भुत है। क्या आपने कभी इन पुण्य स्थानों को यात्रा द्वारा पवित्र किया है?

**विद्योत्तमा**—नहीं, नहीं। मैं वहाँ नहीं गई। पुराणों में पढ कर और तीर्थयात्रा से वापिस आये भक्तों से कर्ण-परम्परा से मैंने इस बात को जाना है।

**कालिदास**—यहाँ हिमालय प्रदेश में पार्वती और शिव के परम वैभव के स्थान हैं। ये पुण्यदायी हैं। मन्दाकिनी के दक्षिण तटवर्ती पर्वत-शिखर पर गुप्तकाशी नाम

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धामनि शशिशेखरस्यार्द्धनारीश्वरस्य मन्दिरम् । ततश्च दक्षिणस्यां दिशि शोणितपुरम् । अत्र प्रियमिलनातुरा बाणसुता उषा चित्रलेखया समानीतं कृष्णपौत्रमनिरुद्धकुमारमुपलभ्य यौवनसुलभरतिविलासाननुबभूव । तस्य च समक्षं वामतटवर्तिनि गिरिशिखरे शशिभृतः ओङ्कारेश्वर-मन्दिरम् । अत्र शिवबल्लभां पार्वतीं बाणात्मजा उषा शिष्यभावेनोपस्थिता । उषीमठनाम्नाऽपि प्रथितमिदं पुण्यतीर्थम् ।

**इला**—श्रूयते च प्रकृतिरमण्याः निसर्गसौन्दर्येण समावर्जितहृदयाः सहृदयाः यात्रिणो न कथमपि तत्स्थानं विहातुम् क्षमन्ते ।

**कालिदासः**—सत्यं भणति भवती । प्राकृतिकसौन्दर्यनिधिरेव सा स्थली । एकतस्तु गिरिजया पयोधरसमघटविनिः सृतैः पयोभिः परिषिच्यमानानां देवद्रुमाणां हरितनीलपङ्क्तयो परतश्च देवपूजनार्हाणां लेखनीयत्वग्धारकाणां भूर्जपादपानां शुभ्रावल्यो दर्शकानां दृष्टीरावघ्नन्ति । अत्र च यक्ष वधूवेणीभूषणप्रसूनमञ्जरीप्रसवयितॄणां पारिजाततरूणामरुणाभकिसलय-

---

के स्थान पर शिव का अर्धनारीश्वर मन्दिर है । इसके दक्षिण दिशा में शोणितपुर है । यहाँ प्रिय से मिलने के लिये आतुर बाणपुत्री उषा ने चित्रलेखा द्वारा लाये गये कृष्ण-पौत्र अनिरुद्ध को पाकर यौवन के सुलभ रति-विलासों का उपभोग किया था । उसके सामने मन्दाकिनी के बाँयें तट के पर्वत-शिखर पर शिव का ओंकारेश्वर मन्दिर है । यहाँ शिव की प्रिया पार्वती के पास बाणपुत्री उषा शिष्य भाव से उपस्थित हुई थी । यह स्थान उषीमठ नाम से भी प्रसिद्ध पुण्य तीर्थ है ।

**इला**—सुना जाता है कि प्रकृतिरूपी रमणी के नैसर्गिक सौन्दर्य से आकृष्ट हृदय वाले सहृदय पथिक उस स्थान को छोड़ने में असमर्थ रहते हैं ।

**कालिदास**—आप सत्य कहती हैं । वह स्थल प्राकृतिक सौन्दर्य की निधि ही है । वहाँ एक ओर तो पार्वती के द्वारा स्तनों के सदृश घटों से निकले जलों से सींचें जाते हुये देवदारु वृक्षों की हरी पंक्तियाँ और दूसरी ओर देवपूजन के योग्य तथा लेखन सामग्री को सम्पादित करने वाली छाल को धारण करने वाले भोज वृक्षों की शुभ्र पंक्तियाँ देखने वालों को दृष्टियों को बाँध लेती हैं । यहाँ यक्ष-वधुओं की वेणियों के अलङ्कारभूत पुष्प-मञ्जरियों को उत्पन्न करने वाले

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्मिश्रहरितपत्राणि मरकतमणिजटितगारुडरत्नराशय इवाभान्ति । ग्रन्थिपर्णकृतप्रणयानां मृगमदमृगाणां समासादनेन समधिगतसुरभिषु शिलातलेषु प्रणयिभिः सह संविशद्भिः यक्षतरुणैः कल्पतरुपल्लवेषु गौरीपतिचरितानि लिख्यन्ते गीयन्ते च ।

**विद्योत्तमा**—तदनन्तरम् ..।

**कालिदासः**—तत्र कतिपयदिवसं यावन्मया भगवती काली अभ्यर्चिता । समीपस्थेभ्यो ग्रामेभ्यो जलानयनसमागतानां पारिजातादितरुकलिकापुष्पालङ्कारविभूषणानां नयननिमीलनकन्दुकसैकतरत्नगोपनादिक्रीडाहर्षनिर्भराणां यक्षबालिकानां यक्षवधूनां च कलहासध्वनिभिरलङ्कृताः मध्याह्नसमयास्तत्र अतिमनोरमाः प्रतिभान्ति ।

**विद्योत्तमा**—अहो ! तत्र यक्ष कामिनीनां निवासः ? श्रूयते तासामलौकिकं दिव्यं सौन्दर्यं विरतविलासानामपि ऋषीणां मनांसि बलाद् हरति ।

---

पारिजात वृक्षों के लाल किसलयों से मिश्रित हरे पत्ते मरकत मणियों से जड़ी गरुड़ मणियों के ढेर से प्रतीत होते हैं । गठिवन घास को खाने वाले कस्तूरी हरिणों के बैठने से सुगन्धित हो जाने वाले शिलातलों पर प्रेमिकाओं के साथ बैठते हुये यक्ष युवक कल्प वृक्षों के पल्लवों पर शिव के चरितों को लिखते हैं तथा उनका गान करते हैं ।

**विद्योत्तमा**—तदनन्तर ?

**कालिदास**—यहाँ कुछ दिन रह कर मैंने काली देवी की अभ्यर्चना की । समीप स्थित ग्रामों से जल लाने के लिये आई हुई पारिजात की कलियों और पुष्पों का अलङ्कार धारण करने वाली, आँखमिचौनी, गेंद, रेती में रत्न छिपाना आदि क्रीडाओं के हर्ष में निमग्न यक्ष बालिकाओं और यक्ष वधुओं की अव्यक्त मधुर हंसी की ध्वनियों से मध्याह्न के समय वहाँ अति मनोरम प्रतीत होते थे ।

**विद्योत्तमा**—अहो ! वहाँ यक्ष-कामिनियों का निवास है । सुनते हैं कि उनका दिव्य सौन्दर्य अलौकिक है । वह विलासों से दूर ऋषियों के भी मनों का जबरदस्ती हरण कर लेता है ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कालिदासः**—सत्यं ब्रवीति भवती। सौन्दर्यं तासामलौकिकं दिव्यं हृदयहारि च। परन्तु भवत्याः सौन्दर्यस्य दास्येऽप्यधिकारितां नावहति।

**विद्योत्तमा**—(लज्जावरक्तविनम्रवदना भूत्वा) ततस्ततः ?

**कालिदासः**—एकस्मिन् सायंसमये भूर्जलोध्रदेवद्रुमपारिजातादितरूणां लम्बायमानछायाभिः समारूढे कालीमन्दिरे केदारशिखरप्रतिक्षिप्तैः रश्मिमालिरश्मिभिः झिलामिलायमानासु मन्दाकिनीसरस्वतीसङ्गमस्वच्छन्दोच्छलद्लहरीष्वहं भवतीमेव मनसा ध्यायन् देवप्रतिमायाश्चरणयोः सन्निकट एव ध्याननिमीलितनयनः स्वप्नावस्थायां गतः।

**इला**—तदनन्तरम्...।

**कालिदासः**—स्वप्नलोके विहरता मया दृष्टम्--"अहं यक्षरूपो धनपतिदेवतायाः कुबेरस्य राजधान्यां मन्दाकिनितटवर्तिन्यामलकापुर्यां वर्ते। अत्र रजन्यः केदारशिखरप्रतिबिम्बितशिवललाटशशिरश्मिभिः सततं प्रकाशन्ते। षड्ऋतुभिः सततं सुशोभितायामलकापुर्यां राजपथमुभयतः सप्तभूमिका

---

**कालिदास**—आप ठीक कहती हैं। उनका सौन्दर्य अलौकिक और हृदय को हरण करने वाला परन्तु आपके सौन्दर्य का वह पासंग भी नहीं है।

**विद्योत्तमा**—(लज्जा से आरक्त मुख को नीचे झुका कर) उसके पश्चात्...।

**कालिदास**—एक सायंकाल, जबकि भोज, लोध्र और देवदारु वृक्षों की लम्बी छायायें काली मन्दिर पर पड़ रही थीं और केदार पर्वत के शिखर से प्रक्षिप्त सूर्य की किरणे मन्दाकिनी सरस्वती के संगम पर स्वच्छन्द उछलती लहरों में झिलमिला रही थी, मैं आपका ही मन में ध्यान करता हुआ देवी की प्रतिमा के चरणों के समीप ही ध्यान में आँखों को बन्द करके स्वप्न की अवस्था में पहुँच गया।

**इला**—उसके पश्चात् ?

**कालिदास**—स्वप्नलोक में विहार करते हुये मैंने देखा कि मैं यक्ष हूँ और धन के देवता कुबेर की मन्दाकिनी के तट पर बसी राजधानी अलकापुरी में हूँ। यहाँ की रात्रियाँ केदारशिखर से प्रक्षिप्त चन्द्रमा की किरणों से निरन्तर प्रकाशित रहती हैं। छओं ऋतुओं से सदा सुशोभित अलकापुरी में राजमार्ग के दोनों

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उज्ज्वलाः प्रासादाः। तत्र कुसुमाभरणाः नित्ययौवनमदोन्मत्ताः यक्षप्रमदाः प्रियतमैः यक्षैः सार्धं प्रदोषेषु बहिरुपवनेषु विहरन्त्यो विभाकरोदयावधिकान् विलासान् भजन्ते।

**इला**—अहो! कुवेरनुरागगाम्भीर्यम् ?

**कालिदासः**—तत्र धनपतिगृहानुत्तरेणास्मदीयमपि गृहम्। अत्र मन्दाराशोकबकुलतरुबहुले प्रमदवनेऽहं विद्योत्तमया यक्षरूपिण्या बहुविधं प्रसाद्यमानस्तस्याः प्रणयास्पदीभूतो विविधैर्विलासैर्विलसितोऽलौकिकरसहर्षं बिभर्मि।

(राजकुमारी वदनमूनेमय्य निःशब्दं रोदिति)।

**इला**—ततस्ततः ?

**कालिदासः**—कदाचिदियं यक्षिणी मन्नामाङ्कितानि स्वयमपि विरचितपदानि गीतानि वीणातन्त्रीस्वरैः साधयन्ती गायति, कदाचित् काञ्चनवासयष्टिसमुपविष्टं नीलकण्ठं शिञ्जावलयसुभगैः करतालध्वनिभिः नर्तयति,

---

और सात मंजिले उज्जवल प्रासाद हैं। पुष्पों से अलङ्कृत और अमर यौवन के मद से भरी यक्ष प्रमदाये प्रियतम यक्षों के साथ सन्ध्याकाल में बाहर उपवनों में विहार करती हैं। उनके ये विलास सूर्य के उदय को देखकर ही रुकते हैं।

**इला**—कवि के अनुराग की गम्भीरता आश्चर्यजनक है।

**कालिदास**—वहाँ कुवेर के घर से उत्तरदिशा में हमारा भी घर है। इसके अन्तःपुर की बाटिका में मन्दार, अशोक और बकुल के अनेक वृक्ष हैं। यहाँ विद्योत्तमा यक्षिणी के रूप में अनेक प्रकार से मुझको प्रसन्न करती है। प्रेम करती हुई उसके प्रणय विलासों में मैं विलासमय होकर हर्ष से भर जाता हूँ।

(राजकुमारी मुख को झुका कर निःशब्द रोती है)।

**इला**—उसके पश्चात् ?

**कालिदास**—कभी तो वह यक्षिणी स्वयं के रचे गये मेरे नाम से अंकित पद वाले गीतों को वीणा के स्वरों के साथ साध कर गाती है, कभी स्वर्ण-वासयष्टि पर बैठे हुये मोर को कंगनों की ध्वनियों से सुन्दर तालियों को बजा-बजा कर

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कदाचित् सखीभिः परिवृता वामपादप्रहाराभिलाषिणं रक्ताशोकं कृतार्थयति, कदाचिच्च वदनमदिरामाकाङ्क्षमाणं केसरमनुगृह्णाति। अथ च समीपवर्तिनं पुनरपि सामीप्यमनुवर्तमानं मां कटाक्षैः प्रहृत्य भुजवल्लर्यालिङ्गनोच्छ्वसितं विदधती...(कण्ठावरोधेन विरम्याश्रूणि प्रमार्जयति)।

(राजकुमार्या मन्दं मन्दं क्रन्दनध्वनयः श्रूयन्ते)

**इला**—कविप्रवर ! अलं सन्तापेन। व्यतिक्रान्तास्ते दिवसाः। ततस्ततः ?

**कालिदासः**—तस्मिन्नेव क्षणे सायंसमये देव्युपासनासमागतानां भक्तजनानां सघण्टावादं स्तोत्रध्वनिभिर्भग्ना मे तन्द्रा स्वप्नपरम्परा च। अवलोकितं च मया, यदहं तस्मिन्नेव कालिमन्दिरे प्रतिमायाश्चरणयोरेव वर्ते।

**इला**—ततः किं संवृत्तम् ?

**कालिदासः**—तदनन्तरं भगवतीं समर्च्य, अन्यत् सर्वं विस्मृत्य विद्योत्तमा-

---

नचाती है, कहीं सखियों से घिरी हुई बायें चरण की अपेक्षा रखने वाले लाल अशोक को कृतार्थ करती है और कहीं मुख की मदिरा को चाहने वाले मौलसिरी पर कृपा करती है। तदनन्तर समीप भी स्थित, परन्तु और भी अधिक सामीप्य चाहने वाले मुझ पर कटाक्षों का प्रहार करके भुजरूप बल्लरियों से आलिङ्गन करके उच्छ्वसित करती हुई...। (कण्ठ के रूंध जाने से रुक कर आँसुओं को पोंछता है)।

(राजकुमारी मन्द-मन्द रुदन ध्वनियाँ सुनाई देती हैं)।

**इला**—कविश्रेष्ठ ! दुःखी न होइये। वे दिन बीत गये। उसके बाद...।

**कालिदास**—उसी क्षण सायंकाल देवी की उपासना के लिये आये हुये भक्तों की घण्टा वाद्य सहित स्तोत्र-ध्वनियों ने मेरी तन्द्रा को और स्वप्नों को तोड़ दिया। मैंने देखा कि मैं उसी काली देवी के मन्दिर में प्रतिभा के चरणों में हूँ।

**इला**—उसके बाद क्या हुआ ?

**कालिदास**—तदनन्तर भगवती का पूजन करके, सब कुछ भूलकर, केवल विद्योत्तमा

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निहितहृदयो विद्योत्तमामयं सर्वं जगदवलोकयन् विरहव्यथाव्यथितवपुश्चित्तः सन्तापसहनाक्षमः करुणामय्या रजन्या अङ्के निधाय स्वापितः। रात्रौ च मया दृष्टम्...।

इला—किमवलोकितम् ?

कालिदासः—सिंहवाहिनी अष्टभुजा काली कराला दुर्गा देवी मामादिशति—वत्स ! निवर्तस्व। पूर्णा ते प्रतिज्ञा। सर्वासामेव विद्यानां ज्ञानमधिगतम्। प्रादुर्भूता ते सकलजगद्विमोहिनी सहृदयहृदयहारिणी काव्यप्रवर्तिनी प्रतिभा। अतिशेष्यसे त्वं सकलानेव पूर्ववर्तिनः कवीन् स्वकाव्यरचनानैपुण्यप्रभावेण। गच्छ च तमेव रामगिरिं, यस्योपत्यकायां संस्थितो देवग्रामः, तव चापरजननीव वामदेवगुरुकुलभूमिर्विद्याध्ययनस्थली। अविनश्वरया त्रैलोक्यव्यापिन्या स्थानसमयापरिच्छिन्नया कार्तिकौमुद्या सकल-

---

को हृदय में रखकर सारे संसार को विद्योत्तमामय देखता हुआ, विरह की पीड़ा से व्यथित शरीर और मन वाला मैं सन्ताप को सहन करने में असमर्थ हो गया। तब सदा करुणामयी रजनी ने मुझको अपनी गोदी में लेकर सुला दिया। और रात्रि में मैंने देखा...।

इला—क्या देखा ?

कालिदास—सिंहवाहिनी अष्टभुजा काली कराला मुझको आदेश दे रही हैं—"वत्स लौट जाओ। तुम्हारी प्रतिज्ञा पूरी हो गई। सब विद्याओं का ज्ञान प्राप्त कर लिया है। तुममें संसार को विमोहित करने वाली, सहृदयों का हृदय हरण करने वाली और काव्य की रचना करने वाली प्रतिभा उत्पन्न हो गई है। तुम अपनी काव्य-रचना की निपुणता के प्रभाव से सभी पूर्ववर्ती कवियों से बढ़ कर होगे। तुम उसी रामगिरि पर्वत पर जाओ, जिसकी उपत्यका में स्थित देवग्राम में तुमने जन्म लिया था और जहाँ तुम्हारी दूसरी माता हो, इस प्रकार का वामदेव का आश्रम गुरुकुल तुम्हारे अध्ययन की स्थली है। तुम तीनों लोकों में फैलने वाली तथा समय से न बंधने वाली अविनश्वर कीर्ति को प्राप्त करोगे,

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मेव भुवनं धवलयिष्यसि त्वम् ।

**इला**—अहो ! देव्याः प्रसादः ।

**कालिदासः**—तदनन्तरमहं रामगिरिमेव संनिवृत्तः ।

**इला**—परन्तु भगवान् रचनासम्बन्धि वृत्तं वर्णयति स्म ।

**कालिदासः**—श्रावयामि तावत् । एकस्मिन् दिवसेऽहं रामगिरिवन्यप्रदेशेषु विचरन्नासम् । आषाढमासस्य प्रारम्भ एवासीत् । सहसा तत्पर्वतशिखरं धनीभूतैर्जीमूतैराश्लिष्टम् । तावदेव तवैतत्सख्याः स्मृतिर्मां विह्वलतामनयत् । विरहवेदनया सम्पीडितोऽहमनेन जीमूतेनैव स्वकुशलमयीं प्रवृत्तिं हारयिष्यन्नभवम् । प्रश्नस्य कश्चिदिति पदमपि माँ विह्वलयति स्म । विश्लेषव्यथितस्य मे तदैव काव्यरचनाप्रवृत्तिः सञ्जाता । विनिःसृतं मे वदनादनायासमेव मन्दाक्रान्ता छन्दः कश्चित्पदपूर्वकम्----

---

जो सारे भुवन को चन्द्रिका के समान शुभ्र कर देगी ।"

**इला**—देवी की कृपा अद्भुत है ।

**कालिदास**—तदनन्तर मैं रामगिरि पर लौट आया ।

**इला**—परन्तु, आप तो काव्य-रचना की बात कह रहे थे ?

**कालिदास**—सुना रहा हूँ । एक दिन मैं रामगिरि के वनों में घूम रहा था । आषाढ मास प्रारम्भ हो गया था । एकाएक पर्वत के शिखर को घने मेघों ने घेर लिया । तभी तुम्हारी इस सखी की स्मृति ने मुझको विह्वल बना दिया । विरह-वेदना से पीडित मेरी अभिलाषा हुई कि इसी मेघ द्वारा अपना कुशल-वृत्तान्त पहुँचा दूं । प्रश्न का "कश्चित्" (किसी) पद भी मुझको व्याकुल कर रहा था । विरह-व्यथित मेरी काव्य-रचना की प्रवृत्ति हुई । मेरे मुख से अनायास ही यह छन्द प्रस्फुरित हुआ—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कश्चित्कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येन भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ।।

राजकुमारि ! एतन्मेघदूताख्यं गीतिकाव्यमङ्गीकरोतु भवती ।

विद्योत्तमा—(उत्थाय पुस्तकं करयोः परिगृह्य शिरसा च स्पृष्ट्वा) आर्यपुत्र ! अत्यधिकमनुगृहीतास्मि । (उपविशति) ।

कालिदासः—अयं तु भवत्या एव मय्यनुग्रहः ।

विद्योत्तमा—(समन्दस्मितम्) गीतिकाव्यस्यानेकानि पद्यानि मया पूर्वमपि

---

किसी यक्ष ने नवपरिणय में रतिरत हो सुध-बुध खोई थी ।
प्रभु की सेवा भूल पिया से व्यथा विरह की गुरु पाई थी ।
स्वामी ने सेवक के पद के गौरव की महिमा छीनी थी ।
एक वर्ष के निर्वासन की सजा यक्ष को तत्क्षण दी थी ।
जहाँ नमेरू घन तरूओं की सदा सुहानी छायायें थीं ।
जहाँ जानकी के स्नानों से पावन जल की धारायें थीं ।
वहाँ रामगिरि के डांडों पर हरी-भरी वन की धरती पर ।
पुण्य आश्रमों में जाकर ही शरण यक्ष को मिल पाई थी ।।

(राजकुमारी को समर्पित करते हुये) राजकुमारि ! इस मेघदूत नाम के गीति-काव्य को स्वीकार कीजिये ।

विद्योत्तमा—(उठकर पुस्तक हाथ में लेकर और सिर से स्पर्श करके) आर्यपुत्र ! मैं अनुगृहीत हुई हूँ ।

कालिदास—यह आपका ही मुझ पर अनुग्रह है ।

विद्योत्तमा—(मन्द मुसकरा कर) इस गीतिकाव्य के अनेक पद्यों को मैंने पहले भी

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पठितानि। लोके प्रसिद्धिं गतान्येतानि नगरेषु, ग्रामेषु, जनपदेषु च जनैः लोकगीतरूपेण गीयन्ते श्रूयन्ते च।

कालिदासः—सर्वमेतत् भवतीनामेव प्रभावातिशयः।

विद्योत्तमा—आर्यपुत्र ! गीतेष्वेतेषु यक्ष विरहजनितां वेदनामयीमनुभूतिं निशम्यानुभूयते मया, कवेः प्राणैरपि प्रिया यक्षिणी अहमेव।

कालिदासः—सत्यमेवतत्। एतद्गीतिकाव्यं मया कालिमन्दिरेऽवलोकितं तत्स्वप्नमेव स्मरता विरचितम्। सरस्वतीमन्दाकिनीसङ्गमवर्तिन्यामलकापुर्यां वर्तमाना भवत्येव यक्षिणीरूपेण मां प्रतिपालयन्ती विरहसन्तापसन्तप्तकृशतनुः वर्तते। इत्येव कल्पनाः मेघसन्देशे सन्निहिताः।

इला—कविप्रवर ! लोकोत्तरा एव भवतां कल्पनाः।

कालिदासः—(समन्दस्मितम्) राजकुमारि ! मन्ये, भवत्या प्रश्नस्य समुचित-

---

पढ़ा है। लोक में अति प्रसिद्ध ये पद्य नगरों, ग्रामों और जनपदों में लोकगीतों के रूप में गाये जाते हुये सुने जा सकते हैं।

कालिदास—यह सब आपके ही प्रभाव का अतिशय है।

विद्योत्तमा—आर्यपुत्र ! इन गीतों में यक्ष की विरह-वेदनामयी अनुभूति को सुनकर मुझको अनुभव होता है कि आपकी प्राणों से भी प्रिय यक्षिणी मैं ही हूँ।

कालिदास—यह सत्य है। इस गीतिकाव्य की रचना मैंने काली-मन्दिर के उस स्वप्न का स्मरण करके की थी। सरस्वती-मन्दाकिनी के संगम पर स्थित कुबेर-नगरी अलकापुरी में आप ही यक्षिणी के रूप में मेरी प्रतीक्षा करती हुई विरह के सन्ताप से कृश शरीर वाली हो। यही कल्पनायें मेघों के सन्देश में निहित हैं।

इला—कविश्रेष्ठ ! आपकी कल्पनायें अलौकिक हैं।

कालिदास—(मन्द मुसकरा कर) राजकुमारि ! मैं समझता हूँ कि आपने अपने प्रश्न

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुत्तरं सम्प्राप्तम् । सम्प्रति किमहं भवत्कक्ष प्रवेशाधिकार... ।

विद्योत्तमा—(पुस्तकानि मञ्चिकायां संस्थाप्य पत्युश्चरणावाश्लिष्य नयने चाश्रुभिः संपूर्य) आर्यपुत्र ! न कथमप्यहं वोढुं क्षमा भवतामनुपमस्य त्यागस्य, प्रेम्णः, स्नेहस्य, अनुकम्पायाश्च भारम् । नाहमतोऽधिकम्... (कण्ठमवरुध्यते) ।

कालिदासः—सुमुखि ! सफलं मेऽद्य जीवनम् । सम्प्रत्यस्माभिः राजसभायां समुपस्थातव्यम् । प्रतीक्षते महाराजः । ततश्च वयं मातुश्चरणवन्दनायै देवग्रामं गमिष्यामः ।

विद्योत्तमा—अहमपि श्वश्रूचरणस्पर्शलब्धप्रसादा धन्यतमामात्मानं गणयिष्यामि । परन्तु...परन्तु...क्व...माता... ।

कालिदासः—चिरेण प्रतीक्षते जननी । सस्नुषं तनूजमवलोक्य स्रवत्पयोधरा

---

का समुचित उत्तर पा लिया है । क्या अब मैं आपके कक्ष में प्रवेश करने का अधिकारी... ?

विद्योत्तमा—(पुस्तकों को मञ्चिका पर रख कर, पति के चरणों में गिर कर और आँखों में आँसू भर कर) आर्यपुत्र ! मैं आपके इस अनुपम त्याग, प्रेम, स्नेह और अनुकम्पा का भार कैसे वहन करूँ ? मुझको अधिक लज्जित न करें ।

कालिदास—हे सुमुखि ! आज मेरा जीवन सफल हो गया है । अब हमको राजसभा में उपस्थित होना चाहिये । महाराज प्रतीक्षा कर रहे होंगे । उसके बाद हम माता के चरणों की बन्दना करने के लिये देवग्राम जायेंगे ।

विद्योत्तमा—मैं भी माता के चरणों का स्पर्श करके इस कृपा से अपने को धन्य समझूंगी । परन्तु...परन्तु...कहाँ...माता... ।

कालिदास—दीर्घकाल से प्रतीक्षा करती हुई वह मेरी माता पुत्र और पुत्रवधू को देख

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सा हर्षोत्फुल्लनयनजलार्द्रा भविष्यति । मातुश्चरणाभिवन्दनेनैवावयोर्जीवनं धन्यं सफलं च ।

**विद्योत्तमा**—अयि जननि...कुत्रासि त्वम् ?

(राजकुमारी विगतचेतनेवाधः पतति । कालिदासस्तां कथमप्यवलम्ब्य मञ्चिकायां संवेश्य इलां निरीक्षते प्रश्नसूचकदृष्ट्या) ।

**इला**—कविप्रवर ! इतो निर्गतेषु च भवत्सु स्वसुतमन्वेषयन्ती भवतां जननी एतन्नगरीं समागता । उच्चैराक्रोशमाना सा नगरस्यकोणे-कोणे परिभ्रमन्ती अनवाप्य भवन्तं अवितरां पीडिता बभूव । राजकुमारी सादरं साग्रहं सश्रद्धं च तां निजभवनमानिनाय ।

**कालिदासः**—(अवरुद्धकण्ठेन) हा मे जननि ! कुत्र वर्तसे ?

---

कर स्तनों से दूध को द्रवित करेगी । उसकी आँखें प्रसन्नता से खिल कर पुनः आँसुओं से अवरुद्ध हो जायेंगी । माता के चरणों की बन्दना करके हमारा जीवन धन्य और सफल हो जायेगा ।

**विद्योत्तमा**—हे माता...तू कहाँ है... ?

(राजकुमारी मूर्छित सी होकर नीचे गिर जाती है । कालिदास उसको सहारा देकर मञ्चिका पर बिठा कर इला की ओर प्रश्नसूचक दृष्टि से देखते हैं) ।

**इला**—कविश्रेष्ठ यहाँ से आपके निकल जाने पर अपने पुत्र को खोजती हुई आपकी माता इस नगर में आई थीं । आपको ऊँचे स्वर से पुकारती हुई वे नगर के कोने कोने में भटकती हुई, किन्तु आपको न पाकर बहुत पीड़ित हुईं । राजकुमारी आदर और श्रद्धा से उनको अपने भवन में ले आईं ।

**कालिदास**—(रूंधे गले से) हाय माता ! तुम कहाँ हो !

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इला—(चरणयोः प्रणिपत्य) राजकुमार्याः सहस्रशो निवेदनानि, प्रार्थनाश्चाविगणय्य सा न जाने कुत्र तिरोभूता ?

कालिदास—किमभूत् तस्याः ? कुत्र गता सा ?

इला—कविप्रवर ! न जाने। न सा प्रपेदे स्वकीयं देवग्रामम्। चारैः बहुशोऽप्यनुसन्धीयमानायास्तस्याः न किमपि वृत्तं समुपलब्धम्।

कालिदासः—(मञ्चिकायामुपविश्य भालं च करयोराकुञ्च्य) मातः ! जननि ! क्वासि त्वम् ? कुत्र त्वां परिमार्गयेयम् ?

(नेपथ्ये कोलाहलः)

इला—इरे ! बहिर्गत्वा पश्य। कस्मादभ्युत्थितोऽयं महान् कोलाहलः ?

इरावती—(बहिर्गत्वा निवृत्य च) सखि ! प्रासादाधोमार्गे—"रे पुत्र ! त्वं

---

इला—(पैरों में गिर कर) हजारों निवेदनों और प्रार्थनाओं को न मान कर वे न जाने कहाँ तिरोहित हो गईं।

कालिदास—उनका क्या हुआ, और वे कहाँ चली गईं ?

इला—कविश्रेष्ठ ! वे अपने ग्राम भी नहीं पहुँची। गुप्तचरों द्वारा बहुत खोज कराने पर भी उनका कोई वृत्तान्त पता नहीं चल सका।

कालिदास—(मञ्चिका पर बैठ कर और माथे को हाथों में भींच कर) मां-मां ! तू कहाँ है ? तुझको कहाँ खोजूं ?

(नेपथ्य में कोलाहल होता है)

इला—इरे ! बाहर जाकर देखो कि यह महान् कोलाहल क्यों हो रहा है ?

इरावती—(बाहर जाकर और लौट कर) सखि ! प्रासाद से नीचे के मार्ग में—

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्वासि ? हे करिया ! कुत्र गतस्त्वम् ? हे कालिदास ! किं न शृणोषि मे वचांसि ?" इत्थमाक्रोशमाना कुररीव काचिद् विक्षिप्तचिता वृद्धा नगरे परिभ्रमति । नगरस्योद्दण्डाः चञ्चलाश्च बालकास्तां परित आवृत्य कोलाहलायन्ते ।

**विद्योत्तमा**—(सहसा नयने उन्मील्य उत्थाय च) ओह ! काचिद् वृद्धा स्वसुतं कालिदासमुच्चैराकारयति ? (इलां निरीक्ष्य) इले ! निश्चयेन आर्यपुत्रस्य जननी सा । आगच्छन्तु भवन्तः सर्वे । सादरं तामत्रैव आनयामः ।

**इला**—स्थीयतामत्रभवती राजकुमारी । कविप्रवर ! भवानपि तिष्ठत्वत्रैव । आनयाम्यहमेव गत्वा परमादरणीयां मातरम् (बहिर्गच्छति) ।

**कालिदासः**—(क्षणं स्थित्वा) हा मे मातः ! वात्सल्यभावभरितहृदयस्य ते वेदनामनुचिन्त्य न मे मनसः शान्तिः । अस्तु । पश्यामि तावत् ।

---

"हे पुत्र ! तू कहाँ है ? हे करिया ! तू कहाँ है ? तू कहाँ चला गया ? हे कालिदास ! मेरे वचनों को क्यों नहीं सुनता ?" इस प्रकार कुररी के समान विलाप करती हुई कोई विक्षिप्त सी वृद्धा नगर में भटक रही है । नगर के उद्दण्ड और चञ्चल बालक उसको घेर कर कोलाहल कर रहे हैं ।

**विद्योत्तमा**—(सहसा आँखे खोल कर और उठ कर) ओह ! कोई वृद्धा स्त्री पुत्र कालिदास को उच्च स्वर से पुकारती हुई भटक रही है ? (इला की ओर देख कर) इले ! निश्चय से वे आर्यपुत्र की माता है । आप सब आयें और उनको आदर से यहीं ले आयें । (बाहर जाने को उद्यत होती है) ।

**इला**—आदरणीया राजकुमारि ! कविश्रेष्ठ ! आप यहीं ठहरे । मैं ही जाकर आदरणीया माता जी को ले आती हूँ । (बाहर जाती है) ।

**कालिदास**—(क्षण भर ठहर कर) हाय मेरी माता ! तुम्हारे वात्सल्य भाव से भरे हृदय की वेदना का स्मरण करके मेरे मन में शान्ति नहीं है । अच्छा, देखता हूँ ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(कालिदासो बहिर्गन्तुमीहते । एतस्मिन्नेवान्तरे जीर्णमलिनचीवरधारिण्या वृद्धया पार्वत्या सह इला प्रविशति । पादौ तस्या धूलिधूसरितौ च । तनुमध्यनताऽपि वदने विशिष्टकान्तिविभूषिता ।

**पार्वती**—हा मे पुत्र ! करिया ! कालिदास ! कुत्रासि ? कुत्रासि त्वम् ? देहि मे प्रतिवचनम् ।

(कालिदासः कतिचित् क्षणं वृद्धायाः मुखं निर्निमेषं निरीक्ष्य उपगम्य चरणयो निपतति) ।

**कालिदासः**—हा स्नेहमयि... । कथमेवंविधा तेऽवस्था ?

**पार्वती**—(कालिदासं भुजयोरुत्थाप्य कतिचित्क्षणं तस्य मुखमवलोक्य) वत्स ! वत्स ! त्वमेव मे पुत्रः ? त्वमेव करिया ? त्वमेव कालिदासः ? आदशवर्षं त्वां नगरे नगरे ग्रामे ग्रामे परिमार्गयामि । श्रुतं च मया कालिदासाभिधः कविरेको जगद् यशसा धवलीकरोति । किं त्वमेव स कालिदासः ?

---

(कालिदास बाहर जाने के लिये उद्यत होते हैं । इसी बीच इला एक जीर्ण-मलिन चीवर पहने वृद्धा के साथ प्रवेश करती है । उसके नंगे पैर धूलि से भरे हैं । कमर से झुके होने पर भी मुख पर विशिष्ट कान्ति है) ।

**पार्वती**—ओह ! मेरे पुत्र करिया ! वत्स कालिदास ! कहाँ हो ? तुम कहाँ हो ?

(कालिदास कुछ क्षण वृद्धा के मुख को निर्निमेष देख कर समीप जाकर उसके चरणों में गिर जाते हैं) ।

**कालिदास**—स्नेहमयि जननि ! तुम्हारी ऐसी अवस्था कैसे हो गई ?

**पार्वती**—(कालिदास को भुजाओं में उठा कर और कुछ क्षण उसका मुख देख कर) पुत्र ! वत्स ! तू ही मेरा पुत्र है ? तू ही करिया है ? तू ही कालिदास है ? दस वर्षों तक मैं तुझको नगर-नगर में और ग्राम-ग्राम में खोजती रही हूँ । सुना है कि कालिदास नाम के एक कवि ने यश से जगत् को धवल कर दिया है । क्या तू ही वह कालिदास है ?

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कालिदास—मातः ! सफलीभूतानि ते आशीर्वचांसि ।

पार्वती—(कालिदासं वक्षसाऽऽश्लिष्य मस्तके च परिचुम्ब्य) पुत्र ! समुज्ज्वलीकृतं त्वया स्वकीयं कुलम् । देव्या अनुग्रहेण सार्थकतां गतमद्य ते नाम । ओ मे अङ्गज ! त्वामद्य परिष्वज्य (कण्ठमवरुध्यते) ।

विद्योत्तमा—(वृद्धायाश्चरणयोर्निपत्य) मातः ! इयमधमा सेविका भवत्याश्चरणावभिवन्दते । क्षमस्व एतस्या अपराधान् ।

पार्वती—अहो ! काऽसि ? अहो ! त्वं राजकुमारी विद्योत्तमा ? मे स्नुषा ? न हि, न हि, सुता मे वत्से ! जडबुद्धेः महामूर्खस्य मे सुतस्य प्रतिभायाः विद्यायाः, कवित्वस्य, यशसश्च हेतुस्त्वमेव ।

विद्योत्तमा—मातः ! अहं तु भवत्या अधमा सेविका ।

पार्वती—न हि, न हि । तवैव प्रसादेनाद्य कालिदासस्यास्य यशः सकलं भरत-

---

कालिदास—माता ! तेरे आशीर्वचन सफल हो गये हैं ।

पार्वती—(कालिदास को वक्ष से लगा कर और मस्तक पर चुम्बन करके) वत्स ! तूने अपने कुल को उज्ज्वल कर दिया है । भगवती काली देवी की कृपा से आज तेरा नाम सार्थक हो गया है । ओ मेरे लाल ! आज तेरा आलिङ्गन करके... (कण्ठ अवरुद्ध हो जाता है) ।

विद्योत्तमा—(वृद्धा के चरणों में गिर कर) माता ! यह अधम सेविका आपके चरणों में प्रणाम करती है । इसके अपराधों को क्षमा करें ।

पार्वती—अहो तू कौन है ? अहो तू राजकुमारी है, विद्योत्तमा है, मेरी पुत्रवधू है ? नहीं, नहीं । तू तो मेरी पुत्री है । पुत्री ! इस जडबुद्धि, महामूर्ख मेरे पुत्र की प्रतिभा, विद्या, कवित्व और यश की कारणभूत तू ही है ।

विद्योत्तमा—माता ! मैं तो आपकी अधमा सेविका हूँ ।

पार्वती—नहीं नहीं । तेरे ही प्रसाद से इस कालिदास का यश भरतखण्ड को धवलित

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

खण्डं धवलयति । अस्य काव्यानि गायन्तो जना आनन्दरसनिर्भरा भवन्ति । आयाहि, आयाहि, मां वक्षसा प्रगाढमालिङ्ग्य हृदयं शीतलय (विद्योतमां भुजयोराबद्ध्य आलिङ्गति) ।

कञ्चुकी--(प्रविश्य) महाराज आदिशति (दन्तयोः जिह्वां सन्दश्य) न हि, नहि महाराजः कथयति ।

कालिदास--आदिशति, इत्येव मधुरं वचः । कथय, किमादिशति महाराजः ?

कञ्चुकी--महाराजः कथयति--'महाकविः कालिदास एवाऽस्माकं दुहितृधव इति हर्षप्रफुल्लहृदया वयम् । पूर्वं तावत् शास्त्रार्थे मे सुतां विजित्य, साम्प्रतं च रससिद्धकाव्यानि विरच्य तेन यशसा जगद् धवलीकृतम् । पूर्वनिर्णयानुसारं राजसभायां तस्याभिनन्दनेन सहैव युवराजपदेऽप्यभिषेकः संयोज्यते । महाराज्ञी जामातुः दुहितुश्चाभिवन्दनं कृत्वा स्वात्मानं

---

कर रहा है । इसके काव्यों को गाकर लोग आनन्द के रस से भर जाते हैं । आ जा, आ जा । मेरी छाती को प्रगाढ आलिङ्गन से भर कर हृदय को शीतल कर दे । (विद्योत्तमा को भुजाओं में बाँध कर आलिङ्गन करती है) ।

कञ्चुकी—(प्रवेश करके) महाराज आदेश देते हैं (दान्तों से जीभ काट कर) नहीं नहीं महाराज कहते हैं... ।

कालिदास—आदेश देते हैं, ये ही वचन मधुर लगते हैं । कहो महाराज क्या आदेश देते हैं ?

कञ्चुकी—महाराज कहते हैं—"महाकवि कालिदास हमारे दामाद हैं, यह जान कर हमारा हृदय प्रसन्नता से प्रफुल्लित हो गया है । पहले आपने शास्त्रार्थ में मेरी पुत्री को पराजित किया था और अब रस-सिद्ध काव्यों की रचना करके कीर्ति से जगत् को शुभ्र किया है । पूर्व निश्चय के अनुसार राजसभा में आपका अभिनन्दन होने के साथ ही युवराज पद पर भी अभिषेक होगा । दामाद और

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कृतार्थयितुं मया सह समागच्छत्येव। ततो वयं राजसभां समुपस्था स्यामः।

**कालिदासः**—कञ्चुकिन् ! गम्यताम्। निवेद्यतां महाराजाय, अतिशयेनानुगृहीताः वयम्। मातृदर्शनलब्धप्रसादानामस्माकं सौभाग्यं समुपस्थितम्। सर्वथैवानुकूलोविधिः+सुखमानन्दं च सहस्रशो वर्धयति। वयं राजकुमार्या सह पित्रोः दर्शनाय समुपस्थिता एव।

**कञ्चुकी**—कविप्रवर ! यथाऽऽज्ञापयति भवान् (बहिर्गच्छति)।

(विद्योत्तमाकालिदासौ मातुश्चरणयोः पुनरपि प्रणमतः)।

**कालिदासः**—मातः ! तवैव प्रसादेन आशीर्भिश्च आवाभ्यां दिवसोऽयमनुभूतः। पुनरप्यनुग्राह्यौ आशीर्वचोभिः।

**पार्वती**—ममाशीर्वादाः सर्वदेव वर्तन्ते। सत्वरं प्रस्थातव्यं युष्माभिः राजसभायै।

---

पुत्री का अभिनन्दन करने और अपने आपको कृतार्थ करने के लिये महारानी मेरे साथ आ रही हैं। वहाँ से हम राजसभा में उपस्थित होंगे।"

**कालिदास**—कञ्चुकिन् ! जाओ और महाराज से निवेदन करो कि हम अत्यधिक अनुगृहीत हुये हैं। हमको माता के दर्शनों का सौभाग्य भी प्राप्त हुआ है। विधि सर्वथा अनुकूल है। सुख तथा आनन्द की हजारों गुना वृद्धि कर रहा है। राजकुमारी के माता-पिता के दर्शनों के लिये हम स्वयं ही उपस्थित हो रहे हैं।

**कञ्चुकी**—कविश्रेष्ठ जो आदेश देते हैं।

(कञ्चुकी बाहर जाता है। विद्योत्तमा और कालिदास माता के चरणों में पुनः प्रणाम करते हैं)।

**कालिदास**—माता ! तुम्हारी कृपा और आशीर्वादों से हमने यह दिन देखा है। अपने आशीर्वचनों से हम दोनों पर पुनः अनुग्रह कीजिये।

**पार्वती**—तुम दोनों के लिये मेरे आशीर्वाद सदा ही हैं। हमको अब राजसभा में

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतीक्षते महाराजः। तथापि यदीह भगवती सरस्वती प्रियं कर्तुमिच्छति तर्हीदमस्तु—

(भरतवाक्यम्)

जयतु जयतु रम्या भारती सत्कवीनां
भवतु सहृदयानां रञ्जनं मानसानाम्।
चरणनतिपराऽहं प्रार्थये शारदे ! त्वां
विकसतु कविशक्तिः क्षीयतां वै जडत्वम् ॥

रङ्गमञ्चोपस्थिताः सर्वे जना बहिर्गमनाय समुद्यतन्ते।

(यवनिका पतति)

इति पञ्चमोऽङ्कः

समाप्तं चेदं नाटकम्

---

शीघ्र जाना चाहिये। महाराज वहाँ प्रतीक्षा कर रहे हैं। तथापि यदि भगवती सरस्वती प्रिय करना चाहती है, तो यह होवे—

(भरत-वाक्य)

सत्कवियों की रम्य भारती की धरती पर सदा विजय हो
सहृदय-मानव काव्य-रसों से रञ्जन अनुभव करते हों।
सरस्वती तेरे चरणों में यही सदा है नम्र याचना
गूढभाव का विलयन होकर विकसित होवे काव्य-भावना ॥

(यवनिका गिरती है)

पाँचवाँ अङ्क पूरा हुआ

'अस्ति-कश्चिद्-वागर्थीयम्' नाटक पूरा हुआ

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

